# हा हन्त!

## (उपन्यासः)



प्रणेता
डॉ. अरविन्दकुमारतिवारी

॥ॐ॥

# हा हन्त!

# ALAS!


लेखक:

**डॉ. अरविन्दकमारतिवारी**

आदर्शवैदिकविद्यालयइण्टरकॉलिज

नंगला–सिनौली, बागपतं, उत्तरप्रदेश:



**सत्यम् पब्लिशिंग हाऊस**

नई दिल्ली (भारत)

इस पुस्तक में व्यक्त विचार लेखक/सम्पादक के व्यक्तिगत है। इस पुस्तक में व्यक्त विचारों से किसी भी प्रकार की होने वाली हानि के लिए शब्द संयोजक, मुद्रक तथा प्रकाशक का कोई भी दायित्व नहीं होगा।

# हा हन्त

ISBN : 978-93-85981-56-2

मूल्य : 695.00

प्रथमसंस्करणम् : 2017

© लेखकाधीनः

प्रकाशक:

**सत्यम् पब्लिशिंग हाऊस**

एन-3/25, मोहन गार्डन, उत्तम नगर

नई दिल्ली-110059 दूरभाष : 011-25358642

E-mail : satyampub_2006@yahoo.com

भारत में प्रकाशित

आर.डी. पाण्डेय द्वारा 'सत्यम पब्लिशिंग हाऊस' के लिए प्रकाशित। कॉन्वेक्स पब्लिशिंग सोल्यूशन, नई दिल्ली द्वारा लेआउट डिजाइन तथा विशाल कौशिक प्रिंटर्स, शाहदरा, दिल्ली द्वारा मुद्रित।

पूज्यपितुः

श्रीसालिकतिवारिणः
करकमलयोः समर्पितः
उपन्यासः

**प्रो. अभिराज राजेन्द्रमिश्रः**
पूर्वकुलपतिः
सम्पूर्णानन्द–संस्कृत–विश्वविद्यालयः
वाराणसी 221002

---

# नान्दीवाक्

संस्कृतसपर्यारतानां विशेषतः कविकर्मव्यापृतानां कदम्बके आयुष्मतोऽरविन्दकुमारतिवारिणो नाम शुक्रतारककल्पं चकास्ति। आद्यन्तपरिशुद्धपदशय्यां प्रयुंजानः, प्राक्तनसौष्ठवं परिरक्षन् समसामयिकीं च वेदनां प्रकाशयन्नरविन्दः संस्कृतकविताया आयतिं नियतिं च सम्यक्तया प्रमाणयति।

किं च महान्तं प्रसत्तिभरमाबिभर्ति मन्मानसं सम्प्रति विज्ञायेदं यदयं युवलेखको न केवलं पद्यप्रकार एवाऽपितु श्लक्ष्णगद्यशैल्यामपि सुखप्रविष्टस्तिष्ठति। गद्यं प्रणीय पद्यकविसुलभां कीर्तिं विन्दमानाः कवयो मुष्टिमिता एवेति सर्वे जानन्ति। महाकवेर्बाणभट्टस्येयमेवाऽनितरसाधारणता यदसौ गद्यमवलम्ब्यापि कालिदाससदृशीं समज्ञामवाप।

सोऽयमरविन्दकुमारतिवारी हा हन्तेति नाम्नाख्यातं कमपि प्रत्यग्रमुपन्यासं निर्मिमीते यत्रासौ स्वयमेव नायको वक्ताऽऽख्याता वा। उपन्यासेऽस्मिन् साम्प्रतिकभारतीयसमाजस्सांगोपांगतया प्रतिबिम्बितस्तिष्ठति। काशीहिन्दू विश्वविद्यालयस्थशिवमन्दिरप्रवेशद्वारि क्वचित् स्थण्डिले समुपविष्टः खिन्नमना नायकः केनचित् पृष्टस्सन् तदुत्कण्ठां शमयतीति कथाशिल्पमत्र।

त्वरमाणेनैव मयाऽत्यल्पीयसि कालावधौ ग्रन्थोऽयं संगणफलकस्थितोऽवलोकितः दर्दुरोत्प्लुतिं चावलम्ब्य पठितः कश्चिदंशः। तथाप्यनुभूतम्मया कविकर्मवैभवं रचनाकारस्य। अतीव सरससुबोधपरिशुद्धसंस्कृतशैल्या कविः साम्प्रतिकग्रामनगर–जीवनपद्धतिं तदतीतसंस्कृतिं, भूयस्त्वेन वर्द्धमानामपसंस्कृतिं, ह्रासोन्मुखं च जीवनमूल्यजातं समुपन्यस्यति। आत्मस्पर्शमहिम्ना उपन्यासोऽयं जीवन्निव प्रतिभाति। यथा बाणभट्टः शुकशावकस्य संवेदनश्लथां कथां समुपन्यस्यन्नात्मशैशवं वर्णयति तथैव कविरयं स्वानुभूतिं नीरक्षीरसम्मिश्रणरीत्या प्रस्तौति। तत्सर्वमतीव हृद्यं रमणीयं च।

विश्वसिमि, यदिमां विशिष्टां कृतिं प्रकाशनसौधप्रतिहारभूमिं यावदानीय, कविना न केवलमात्मोपकृतः प्रत्युत संस्कृतजगदेव। तदहं जयजीववचनैररविन्दकुमार तिवारिणं समभिनन्दन् निजाशिषां तं संवर्धयामि। जयतु भारती, जयतु संस्कृतकविकर्म च।

सस्नेहम्

**मिश्रोऽभिराजराजेन्द्रः**

इलाहाबादं
10/02/2017

प्रोफेसर कृष्णकान्त शर्मा
वैदिक दर्शन विभाग
पूर्व संकायप्रमुख, संस्कृतविद्या धर्मविज्ञान संकाय
पूर्व मानद निदेशक, मालवीय भवन
काशी हिन्दू विश्वविद्यालय
वाराणसी–221005
फोन नं.: (0542) 230-7407 (घ.)



**Professor Krishna Kanta Sharma**
Department of Vaidic Darshan
Ex- Dean, Faculty of S V D V
Ex-Hony. Director, Malaviya Bhawan
Banaras Hindu University
Varanasi 221 005
Tel. NO.: (0542) 230-7407(F)

# शुभाशंसनम्

**नमोऽस्तु गुरवे तस्मै वासुदेवाय धीमते।**
**यत्कृपयारविन्देन लब्धं वै काव्यकौशलम्।।**

मच्छिष्यः डॉ.अरविन्दकुमारतिवारी परमपूज्यानां गुरुचरणाना माचार्यवासुदेवद्विवेदिमहाभागानामन्तेवासी अभिनवविषयानाश्रित्य काव्यनिर्माणे प्रवर्तते नैपुण्यं च लभत इति दृष्ट्वा नितरां मोमुद्यते मे चेतः। सामान्यतो वैयाकरणा दार्शनिका वा नीरसा भवन्तीति अस्ति कश्चित्प्रायोवादः, किन्तु अरविन्दोऽयं त्वपवादभूतः। अस्मिन् कवित्वबीजरूपः स संस्कारविशेषः यः भक्तिपदेनोच्यते आलंकारिकैर्या भक्तिं विना काव्ये न प्रसरति स संस्कारबीजः सा भक्तिर्या निसर्गतो वर्तत इत्यस्य काव्यानां दर्शनेन नूनमनुभूयते।

पुण्यश्लोकानां महामनसां पण्डितमदनमोहनमालवीयमहाभागानां तपोभूमौ काशीहिन्दूविश्वविद्यालये अधीतसाङ्ख्ययोगविद्योऽयमरविन्दः काशीहिन्दू–विश्वविद्यालयस्थविश्वनाथमन्दिरपरिसर एव आसीनं विषीदन्तं कमपि प्रमत्तं जनं दृष्ट्वा कश्चिदन्यो जनस्तद्दशां ज्ञातुकामो मैत्रीभावनया यदा तं पृच्छति तदा वारपंचकं निश्श्स्य तेन प्रमत्तेन यदेव प्रोक्तं तदेवालम्ब्य 'हा हन्त'–नामानमुपन्यासमिममुपन्यस्तवानिति सर्वेषामपि काशीहिन्दूविश्वविद्यालयीय–स्नातकानां कृते प्रेरणास्थलम्।

बहवो जना वायुयानेन कलिकातातः पश्यन्तोऽपि न तां तां नदीं प्राकृतिकं सौन्दर्यं वा दृष्ट्वा काव्यं निर्मातुं गीतं वा रचयितुं प्रवृत्ता भवन्ति, किन्तु प्रसिद्धा गीतकाराः संगीतविशारदाः डॉ. भुपेनहजारिका गंगां दृष्ट्वा पद्मां च दृष्ट्वा गीतं लिखति गायति च, तथैव काशीहिन्दूविश्वविद्यालय– स्थविश्वनाथमन्दिरं प्रतिदिनं सहस्रशो जना दर्शनार्थम् आगच्छन्ति, तत्रोपविश्य परस्परं वार्तालापं कुर्वन्ति कदाचित् कश्चित् स्वीयां वेदनामपि श्रावयति, किन्तु न कोऽपि जनः तादृशं वार्तालापं श्रुत्वा कस्यचिद् वेदनां वा ज्ञात्वा काव्यलेखने प्रवृत्तो भवति। अरविन्दस्तु कस्यचिज्जनस्य वेदनां श्रुत्वा उपन्यासलेखने प्रवर्तत इति नूनं तस्य कविहृदयं व्यनक्ति।

पंचसु निश्श्वासेषूपनिबद्धेऽस्मिन् ' हा हन्तनामके' उपन्यासे ग्राम्यवर्णनं वा भवतु नगरवर्णनं वा अस्तु, सर्वत्र अरविन्दस्य नवनवोन्मेषशालिनी प्रज्ञा या च आलंकारिकैः प्रतिभानाम्ना व्यवह्रियते, सा परिलक्ष्यते। ग्राम्यजीवनस्य चित्रणसमये अरविन्दः ग्रामे यापितं स्वीयं शैशवमपि अनिर्वचनीयतया स्मरति निगदति च–अंगुठं स्वमुखे निपीय––

बाल्यजीवनस्य चापल्यं बाल्यजीवनस्य सुखवैभवं च अनिर्वचनीयतया वर्णयति अरविन्दः। वरयात्रायाश्चित्रणमपि सहजतया प्रस्तौति, सम्प्रति जनाः पौरोहित्यकर्मक्षममपि विप्रं शीघ्रं संस्कारं सम्पादय इति निवेदयन्ति, अहह!! विलुप्यमानोऽयं संस्कारो देशादिति कामपि वेदनामपि प्रकटयति। ग्रामेषु धनिनो निर्धनान् स्ववशीकृत्यं यथा पीडयन्ति तदपि अरविन्देन चित्रित–मुपन्यासेऽस्मिन्।

ग्राम्यजीवनं धर्ममार्गानुगामि नागरजीवनम् अर्थमात्रोपजीवि एतत् सर्वमपि अति रमणीयतया उपन्यस्तममुपन्यासेऽस्मिन्। नागराः जनाः कथं सततं व्यस्ताः कथं च सर्वत्र कोलाहलं व्याप्तमिति सर्वं सुचारु चित्रितम्। उपन्यासेऽस्मिन् नगरे रात्रिरपि दिनमिव स्वजनोऽपि परजन इव यथावलोक्यते, यथा च घटिका वशंगतं नगरवासिनां जीवनं तत्सर्वं रमणीयतया निरूपयत्ययमुपन्यासः।

तीर्थवर्णनात्मके उपन्यासस्य तृतीये निश्श्वासे काशीप्रयागादितीर्थानां वर्णनमपि चित्ताकर्षकम्।

समस्यावर्णननामके चतुर्थे निश्श्वासे अरविन्देन सुष्ठु प्रोक्तं यत् तज्जीवनं जीवनमेव नास्ति यत्र समस्या न स्युरिति। प्रजातन्त्रारक्षणयौतुकातंकवादप्रदूषण जनसंख्यावृद्धिवस्तुमिश्रणशिक्षाप्रणालीवृद्धजन–भक्तिभावाभवादिसमस्यानां यथार्थ चित्रणं यथात्र उपन्यासे वर्तते तमिममुपन्यासमधीत्य नेतृवर्गः, अधिकारिवर्गः, वण्ग्विर्गः, शिक्षाधिकारिणः, पुत्रपौत्रादयः सम्बन्धिनश्च यदि कदाचित् शिक्षां लभेरन् नूनमस्योपन्यासलेखनस्य सार्थक्यं स्यादित्यहं मन्ये।

विविधविषयात्मके पंचमे निश्श्वासे पुरुषार्थचतुष्टयविषये, साङ्ख्यदर्शनस्य विविधान् विषयान् श्रीमद्भगवद्गीताया विविधविषयान् चाश्रित्य यदत्र वर्णितं तन्नूनमेव ज्ञानवर्धकम्। अन्ते पूज्यपादानां गुरुचरणानां संस्कृतप्रचाराय समर्थितं जीवनमधिकृत्य यदत्र वर्णितं तन्नूनं सुयोग्यशिष्यस्य सुयोग्यगुरुं प्रति वास्तविकः श्रद्धांजलिरिति वक्तुं शक्यते।

डॉ. अरविन्दकुमारः सर्वदा स्वस्थस्सन् सारस्वतसाधनया संस्कृतस्य प्रचारं संस्कृतवाङ्मयस्य कोषवृद्धिं कर्तुं प्रभवेदिति मे शुभाशिषः।

**डॉ शैलेशकुमारतिवारी**
सहाचार्यो विभागाध्यक्षः, व्याकरणविभागः
उत्तराखण्डसंविविद्यालयः, हरिद्वारम्

# शुभाशंसा

अपारोऽयं सुरभारतीसाहित्यसागरोऽनादिकालतो यथाकालं गृहीतजन्मनामनेकेषाम् अप्रतिमप्रतिभाप्रकर्षोज्ज्वलितमनसां सुमनसां सिद्धविद्यानाममरकमनीयकीर्तिकलेवराणां कविवराणां पदलालित्य–नादसौन्दर्यार्थगाम्भीर्य–रसोत्कर्षप्रभृतिविविधवैशिष्ट्य–संवलितानुपमरमणीयरचनारत्नराशिना देदीप्यत इति नाविदितं विज्ञानाम्। तामेवा–धिवसुधमतिदेवसुधवसुधासुधाधुनीधारिकमनीय–काव्यरचनापरम्परां समुन्नयन्तो विलसन्तस्सन्त्यनेके कवयोऽद्यापि येषु अन्यतमा वर्तन्ते, अस्मदभिन्नहृदयबालसखा डॉ अरविन्दकुमारतिवारीमहोदयाः। प्रणीतानेकपुस्तकानामेषां काव्यकला नैसर्गिकीति बाल्यकालतः पश्यामो वयम्। अनवद्यपद्यगद्यगुम्फनगुणगुपिलायमानो रुचिररसमुचिररचनाचुंचुरयमचिरमेव 'हा हन्त!' इति नामकं काव्यं सहृदयहृदयपरितोषाय प्रकाशमानमस्तीति निशम्य मोमुद्यते मानसमस्मदीयम्।

प्रथितकाव्यकीर्तिकेतुना श्रीगुरुवरचरणारविन्दमकरन्दमिलिन्देनारविन्देनानेन सुरचिते काव्येऽस्मिन् नवलनवलोन्मेषशालिनी प्रतिभा प्रतिभात्यनुपदम्। यद्यपि संस्कृतसाहित्यसेवायां सन्ति संलग्ना अनेके कवयस्तथापि गद्यलेखनतत्परा अंगुलिगण्या एवेति विदितो विषयः। वस्तुतो नवलकमलदलकोमलविमलसरलोदारहृदयोऽयं कविररविन्दः फुल्लदरविन्दमिवैवं वर्तते। उभयोरियानेव विशेषो यत् पुष्पमरविन्दमालोक्य प्रतिभाशालिनो जना रचनातुरा भवन्ति, अयन्तु सामान्यजनमपि बलाद् रचनायां प्रवर्तयति, प्रोत्साहयति झटित्येव कमनीयकाव्यप्रणयने समर्थं च करोति। सकलसपक्षविपक्षनिष्पक्षसमीक्षणचण एष कविः नीरसजनेऽपि रसिकतावितान सिद्धो विद्यते। ईर्ष्या–लोभ– मदादिदुर्गुणानां लेशोऽपि नावलोकितः कदाचिदस्मिन् कवौ।

अतः नवीनया रचनयानया नूनमेव नवनिष्यन्दारविन्दवृन्दमरन्दमवाप्यामन्दानन्दसन्दोहं विन्दन्ति मिलिन्दवृन्दानीव बिन्दुवृन्दान्यपि सपदि आनन्दमन्दाकिनीनिमग्नानि भविष्यन्तीत्यस्माकं द्रढीयान् विश्वासः।

अहमस्य मंजुमंगलार्थं भगवन्तं प्रार्थये।

**डॉ. राजेन्द्र त्रिपाठी 'रसराज'**
अध्यक्ष, संस्कृत विभाग

इलाहाबाद डिग्री कॉलेज
(संघटक परास्नातक कॉलेज)
इलाहाबाद विश्वविद्यालय, इलाहाबाद

---

# शुभाशंसा

अर्वाचीन संस्कृत साहित्य के नवोदित रचनाकारों में अपनी आशु रचना–धर्मिता और सुमधुर काव्य–सृजन के लिये समूचे संस्कृत कवि समवाय और साम्प्रतिक सोशल मीडिया में 'गुणाः प्रियत्वेऽधिकृता न संस्तवः' की सूक्ति को सार्थक करने वाले सुकवि डॉ. अरविन्द कुमार तिवारी द्वारा प्रणीत 'हा हन्त!' शीर्षक का संस्कृत कथा–साहित्य पाँच निश्श्वासों में उपन्यस्त हिन्दी गद्य–विधा में लोकप्रिय उपन्यास विधा का एक ऐसा प्रकाश्यमान उपन्यास है, जो संस्कृत के पारम्परिक गद्य–साहित्य को समादृत करते हुए 'गद्यं कवीनां निकषं वदन्ति' की उक्ति को सार्थकता प्रदान करने वाला अभिनव उद्धरणीय ग्रन्थ है। शब्द–सौष्ठव और भाषा की प्रौढ़ता, कवि की नैसर्गिक काव्य–कुशलता और उसके प्रातिभ–पाण्डित्य से मण्डित मणिकाञ्चन संयोग को सहज रूप में आलोकित करती है। पञ्च निश्श्वासों में उपन्यस्त यह गद्य–काव्य कृति कवि अरविन्द के बाल्यकाल से अद्यावधि तक के जीवन की उन पाँच लीलानुभूतियों को उद्घाटित करने वाली है जिसमें समय–सापेक्ष ग्रामीण परिवेश में अपनी बाल–लीलाओं की स्मृतियों को ताजा करते हुए, ग्राम्यजीवन से शिक्षार्जन आरम्भ कर उच्चशिक्षार्जन तक की अनुभूतियों को समाहित करने का प्रयास किया गया है। विश्वविद्यालीय और नागरीय संस्कृति और सभ्यता के अधुनातन सोपानों पर अग्रसरित होकर तज्जन्य अन्यान्य अनुभूतियों को अपनी इस कृति में संगुम्फित करने का सफल प्रयास किया गया है।काशी विश्वविद्यालय की सांस्कृतिक पृष्ठभूमि में विद्वद्गुरुगरिमा को गौरवान्वित करते हुए कवि अरविन्द ने अपने एक ऐसे तापस गुरु को उत्प्रेरक रूप में उपस्थित किया है जिसकी अन्तरात्मा वर्तमान संस्कृत की दशा और दिशा को लेकर कुछ चिन्तनीय और उदासीन मनस्स्थिति में किसी नवोदित संस्कृत सुकवि को अन्वेषित करने के निमित्त विश्वविद्यालय के एक चतुष्पथ पर आत्मव्यथा सुनाने की बाट जोहती हुई दृष्टिगत होती है।संयोग से वह सुकवि अरविन्द उस दिव्य गुरु का दर्शन प्राप्त करता है और उसकी

मनोगत व्यथा का आश्रय–श्रावक बनकर संस्कृत की वर्तमान प्रासंगिता पर उसकी प्रत्येक जिज्ञासा को उपशमन करने का प्रयत्न करता है। वह अपने ग्राम्य वर्णन, नगर वर्णन, तीर्थ वर्णन, अन्यान्य समस्याओं का वर्णन और अन्त में अपनी शास्त्रीय समीक्षा परक गवेषणात्मक प्रवृत्तियों को उद्घाटित करता है तथा अपनी अनेक काव्य कृतियों और समीक्षाओं से भी परिचित कराने का प्रयास करता है। कवि का यह उपक्रम संस्कृत के प्रति उदासीन, अनुदार और उन नेतृत्वशील समर्थ संरक्षकों को संस्कृत की दशा और दिशा पर पुनर्विचार करने और सार्थक संवर्धन किये जाने का प्रत्यक्ष निदर्शन है।

कवि के इस कथा–साहित्य में कहीं महाकवि बाण का सारगर्भित समासबहुल शब्द–सौष्ठव है, तो कहीं महाकवि दण्डी का पद लालित्य भी। कहीं कविकुल कालिदास जैसी सरस शब्दावली है तो कहीं महाकवि भारवि की भावप्रवणता, कहीं महाकवि माघ जैसा शब्द–विन्यास और अर्थ–गाम्भीर्य है तो कहीं श्री हर्ष जैसा विद्वदौषध और पद लालित्य भी।पण्डित राज जगन्नाथ की ललित पदावली और उनके अन्योक्ति विलास की छवि सुकवि अरविन्द की कृतियों में सहज रूप से द्रष्टव्य है। इनका संस्कृत भाषा पर सहज अनुराग है।इनकी कवित्व प्रतिभा और शास्त्रीय पाण्डित्य का मञ्जुल समन्वय अर्वाचीन संस्कृत सेवियों और रचनाकारों की दृष्टि में अत्यन्त उपादेय और लोकप्रिय है।नवोदित संस्कृत प्रतिभाओं में यह सुकवि अरविन्द एक ऐसा आकर्षण है जो अपनी चतुर्मुखी प्रतिभा से चतुर्वर्णी (रक्त, पीत, श्वेत और नील ) अरविन्द जैसी आभा से अपनी काव्य, कथा, नाट्य और शास्त्रीय समीक्षाओं द्वारा समूचे संस्कृत साहित्य समाज को आलोकित करता हुआ दृष्टिगत होता है।संस्कृत और हिन्दी दोनों भाषाओं में साहित्य–सृजन करते हुए सुकवि अरविन्द का योगदान निश्चितरूप से साहित्य समाज में अपना बहुआयामी व्यक्तित्व और कर्तृत्व प्रदर्शित कर विविधवर्णी अरविन्द को विकसित और प्रफुल्लित कर सकेगा, ऐसी शुभाशंसा से उनकी इस कथा–कृति 'हा हन्त' के सफल प्रकाशन की शुभकामना करता हूँ।

प्रथम निश्श्वास में ग्राम्यजीवन का वर्णन करते हुए कवि अरविन्द ने अपने बाल्य जीवन की उन लुप्तप्राय क्रीडाओं का बहुत ही रोचक वर्णन किया है। कड़ी दोपहरी में बगीचे में जाकर छोटे छोटे पेड़ों पर चढने उतरने वाले खेल लफिया, कबड्डी, सुर्रा, गुल्ली–डंडा ,जैसे अनेक प्रकार के खेलों का स्मरण किया है।

गाँव में मनाये जाने वाले त्योहारों में होली, दीपावली, रक्षाबन्धन और दशहरा आदि त्योहारों में एक दूसरे के साथ पारिवारिक सामञ्जस्य को

दर्शाते हुए आधुनिकता की होड़ से गाँवों में भी नागरीय प्रभाव के कारण होने वाले ह्रास पर कवि की संवेदना मुखरित होती है। गाँवो के रीति–रिवाज 'रहन–सहन, खान–पान, बोली–भाषा और व्यवहार का वर्णन करते हुए वहाँ की लुप्तप्राय संस्कृति पर भी क्षोभ व्यक्त करता है।' ग्रामो नैव सुखाकरो नगरतां यातीव हन्ताधुना गाँव में पुलिस, वकील, अधिकारी कर्मचारी कैसे शोषण करते हैं, वह व्यथा भी अत्यन्त रुचिकर है।कन्या भ्रूण हत्या जैसी सामयिक समस्या पर भी कवि का कवित्व प्रस्फुटित हुआ है–पुत्र और पुत्री के भेद को भी दर्शाते हुए कवि की पीड़ा द्रष्टव्य है।

'हन्तेत्थं सुतजन्मनि प्रमुदिता पुत्रीजनौ दुःखिताः।'

कलियुग में दाम्पत्य जीवन और ससुराल का वर्णन कवि के ज्यौतिषीय ज्ञान को भी परिचत कराता है

श्यालो यस्य शनिगुरुस्सुगृहिणी श्वश्रूश्च केतुः कलौ,
अर्कश्च श्वसुरः कलत्रभगिनी ज्येष्ठा च राहुर्मता।
आवुत्तश्च बुधः सुधांशुसुमुखी श्याली च शुक्राह्वया,
जीवन्मुक्तिमहो पतिस्स लभते रागादिशून्यो भवन्।

सुकवि अरविन्द की भाषा–शैली और शब्द–सौष्ठव इतना सरस और आकर्षक है, जिसके कारण ऐसा प्रतीत होता है कि संस्कृत के पुरातन प्रतिष्ठित महाकवियों जैसी वैखरी–प्रतिभा आज भी अरविन्द जैसे कवियों की लेखनी में सहजता पूर्वक देखी और परखी जा सकती है–ग्राम्यजीवन का एक वर्णन द्रष्टव्य है–'कमनीयकाकलकोकिलकुलकलितकूजनं कुपितकमलास्य कामिनीकम्रविकसितकामिकिंकरकम्पनं कुत्सितकर्मकृपणं कुकृत्याकालकवलित क्रन्दनं कुमतिकर्तककोमलकृष्णकथाकथनं खेदाखिन्नखर्वखगगमनगानगुञ्जित गगनं चंचलचंचुमच्चचटकाचुंकृतिचमत्कृतं चर्वणीयचूतमंजरीच्यवनर सपानच्युत मधुमाससमत्तमुखरमधुपच्छादितदिनं, अजाल्मजालजितजनमानसं, मोहनीयमहनीयमधुरहोलादिमहोत्सवत्सः, दीपावल्यादिपरमपावनपर्वगणेश चतुर्थीहरितालिकाप्रभृतिवरणीयवृत्तविवृद्धिविविधविबुधव्रतं प्रतिकणं निहितं तदेव ग्राम्यजीवनं मन्ये, यत्र मया यापितं नैजं शैशवम् अहो शैशवमनिर्वचनीयम् तदित्थम्–

अंगुष्ठं स्वमुखे निपीय हसनं पीत्वा च मौनं पयो,
रुष्टे भीषणरोदनं गुरुजनैः संलोभनं वस्तुभिः।
प्रेम्णा क्रीडनकैरहो मृदुतमे क्रोडे नवं खेलनं,
वात्सल्याब्धिनिमज्जनं क्व गतवत्तच्छैशवं जीवनम्।

सुकवि अरविन्द का यह वाक्चातुर्य और वर्णन भला किस सहृदय को आह्लादित नहीं करेगा।

शार्दूलविक्रीडित जैसे छन्द की संरचना में सिद्धहस्त कवि का काव्यकौशल वस्तुतः श्लाघ्य और सम्प्रेरक है।

कवि ने पूरे कथा–क्रम में भोजन में लवणवत् यत्र तत्र अपने गीतों व सरस श्लोकों को संगुम्फित कर कथा की सरसता में सातत्य का भरपूर प्रयास किया है। उपन्यास की रोचकता आद्यन्त आत्मानुभूति और आत्मजीवन की.समस्याओं से ओतप्रोत प्रतिपल की संवेदनाओं से अनुस्यूत हुई प्रदर्शित होती है।प्रत्येक पाठक को आत्मावलोकन करने हेतु पूर्ण अवकाश मिलता है, आप बीती घटनाओं, समस्याओं का सहज समन्वय कवि के क्रान्तदर्शित्व का परिचायक सिद्ध होता है। विस्तार भय से सबकुछ उद्धृत कर पाना सम्भव नहीं है पर पूरा उपन्यास एक ही बैठक में पठनीय और प्रशंसनीय है।सुकवि अरविन्द की प्रतिभा और पाण्डित्य की निकषभूत इस कृति के प्रकाशन हेतु मैं अपनी शुभाशंसा निवेदित करते हुए इनके नित्य कीर्ति–संवर्धन की शुभकामना करता हूँ।

# पुरोवाक्

मान्यविबुधवाणीपीयूषपानप्रमत्तसहृदयवरेण्यमौलिललामचुम्बितवाग्विलासा:! काव्य वनिताकटाक्षापहरणकुशला:! स्ववैदग्ध्यप्रचुरप्रभावप्रणतविपुलविद्वत्कुलकवीन्द्रेन्द्रा: निरन्तर परमपावनामरवाङ्मयाब्धिविहिताभिषेकविमलमतय:! विलसन्तीहारविन्दस्याकवेरिह विनतस्य मे सहस्रं नन्दनकाननविकसितपुष्पोपप्रणतिततयश्चरणारविन्देषु भवतां साभिनन्दनम्। ग्रीष्मतापानलं दग्धमीन लब्धसलिलराशिरिव हा हन्त! इत्याख्य उपन्यास: प्रकाश्यत इति श्रावयन् महान्तमानन्दं लभे।

अस्ति हृदि कुतूहलं यत्तदेव विज्ञापयामि। विश्रुतकीर्तिलताप्रतानानाम् अमरवाणी विजयतामिति समुद्घोषकाणां प्रातस्स्मरणीयपादरजस्कानां समपिर्तजीवनसर्वस्वानां सार्वभौमसंस्कृतप्रचारसंस्थानस्य आचार्यवराणां गुरुवराणां वासुदेवद्विवेदिशास्त्रिमहोदयानामन्तेवासी संस्कृतप्रचाराय कृतमतिरहं गुरुमार्गानुगामी सुरभारतीप्रचारणाय सततं प्रयतमानो वर्ते। जानन्ति भवन्तो यत् संस्कृतस्य संरक्षणाय साहित्याभिवृद्धिरपि महत्त्वपूर्णं स्थानमधिकरोति, एतद्धिया मया कश्चन गद्यप्रसर एष: कल्पित:। स्मरामि गुरुवरचरणवन्दनाभिलाषी कदाचित् पद्यं दर्शयन् गुरुणा प्रणोदितो यत्त्वं लिख गद्यमिति स्मरतान्तेवासिनैकदा मया दृष्टस्वप्नेन गद्यलेखनायादृश्यमानवाचावबोधितेन सहृदयजनचेतसोऽपहरणाय स्वान्तस्सुखाय चैष उपन्यासो रचित:।

यद्यपि न कापि गतिरिह मम विदुषां गतिरिव, न कापि मतिरिह बाणभट्टादीनां मतिरिव, न श्रुतिरिह सतां श्रुतिरिव तथापि बालमतिरिव गहनगद्यविपिनभ्रमणचित्तवृत्तिरहं निर्भयं वासुदेवमिव स्वगुरुं वासुदेवं स्मरन् प्रस्थितोऽस्मि।

पंचनिश्श्वाससमुपनिबद्धस्य श्रूयतामुपन्यासस्यास्य वस्तुसारांश:।

उपन्यासोऽयं महामनस्विनां पण्डितमदनमोहनमालवीयानां यशोगानं कुर्वत: काशीहिन्दूविश्वविद्यालयस्थ—मन्दिरपरिसरादुभवति। यत्र कश्चित्प्रमत्तो जनो विषीदन् आसीनो दृश्यते। तदाचरणादिदर्शनसंजातविस्मयेनैकेन केनचिदसौ येन केन प्रकारेण तद्दशाकथाजिज्ञासमेन मैत्रीभावनया पृष्ट:, द्वयोवार्त्तारम्भ:, तेन यदुक्तं तदेवास्मिन्नुपन्यस्तमिह भवतां पुरत हा हन्त! उपन्यासनाम्ना समुपस्थापित:। ज्ञातव्यं यत् स प्रमत्त: असौ प्रष्टा चाहमेवास्मि।

प्रथमो निश्श्वासो ग्रामवर्णननामास्ति, यत्र ग्रामजनदशा दर्शिता वर्तते। ग्रामे कथं पर्वोत्सवा आयोज्यन्ते? कथं व्रतानि अनुष्ठीयन्ते? बालका: कथं खेलन्ति? मातर: मन्दिरेषु शिवादिदेवतापूजनाय गच्छन्ति, कथं वा सत्यनारायण व्रतकथां शृण्वन्ति? होलीदीपावलीगोवर्धन–सूर्यषष्ठीदुर्गादि–पूजनोत्सवो जनै: केन केन प्रकारेण आस्वाद्यते? विवाहकारका विवाहोच्छेदका वा मध्यस्था: किं किं वदन्ति? सरलचित्तमतिर्ग्राम्यजनो वाक्कीलेन कथं निहन्यते? संजातविवाहविलम्ब: कथमवसीदति? किं किं विचारयति? कथं केनचिद् धूर्तेन वंच्यते? इति सर्वं यथावसरं चित्रीकृतमस्ति।

द्वितीयो निश्श्वासो नगरवर्णनाभिधानोऽस्ति, बहूनां नागरजनानां कृत्रिमव्यववहारो दुनोति मानसम्। शिक्षितानां नागरिकाणां विचारो चरित्रं वा वैयक्तिविकासायैव भवतीति साक्षात्कृतेवास्मिन् चित्रीकृतम्।

तृतीयो निश्श्वासस्तीर्थवर्णनाख्यो विलसति, यत्र काशीहरिद्वारादितीर्थानां सम्यक् चित्रणमुपस्थापितमस्ति। तीर्थभ्रमणाल्लाभा एव भवन्तीति मया विचारितम्। अस्मिन् विजृम्भमाणसार्वभौमसंस्कृतसंस्थापकानां गुरूणां स्मरणम्, काश्यां दर्शनीयं साधुजनरूपं प्राचीनानि मन्दिराणि तत्रत्यं सर्वमपि यथादृष्टं वानुमतमत्र लिखितम्।

चतुर्थो निश्श्वास: समास्याभिधो वर्तते, अत्र आरक्षण–जनसंख्या–निर्वृत्तिकता–भ्रष्टाचार–लोकतन्त्रादिविचारणीयविषया विमृष्टा: साधारणमपि जनं जागरयन्ति निजदेशविकासाय।

पंचमोऽस्ति निश्श्वासो विविधशास्त्रीयविषयसंवलित:। मम सङ्गोष्ठीषु पत्रपत्रिकादिषु चान्यत्र प्रकाशिता: शोधनिबन्धा ये दर्शनपुराणसाहित्यादिविषयकास्ते यथावसरं वार्तालापनुकूलास्ते योजितास्सन्ति। अत्रैव यथावसरं विरचितानां संस्कृतगीतानामपि मंजुलोऽन्वयो भोजने लावणिकमिव कल्पितो मनोमोहयति।

अयं 'हा हन्त!' इत्युपन्यास:कथारूपात्मकोऽस्ति। अत्र महाकवीनां पूज्यानां सहृदय धुरीणानां काव्यगुरूणाम् अभिराजराजेन्द्रमिश्रमहोदयानां नान्दीवाक् कथात्मेव, गुरूवराणां कृष्णकान्तशर्ममहोदयानां शुभाशंसनं कथा प्राण इव, सुमधुरकविवराशिरोमणि–राजेन्द्रत्रिपाठिरसराजमहोदयानां शुभाशंसा कथाङ्गानीव मित्रवरस्य सुकवेर्बुधस्य डॉ. शैलेश कुमार तिवारिण: शुभाशंसा च शोभन्ते। विनतभावेन भवद्भ्य: सादरं प्रणतिं समर्पयामि।

अयि काव्यरसपिपासव:! मनीषिण! हा हन्त! उपन्यासस्य प्रकाशनावसरे तान् श्रद्धेयान् प्रणमामि, येषां कविवारिदानां कृपावृष्टिरविन्दोपवने नित्यमेव भवति। तेषु प्रोफेसरश्रीकृष्णकान्तशर्ममहोदया:, वन्दनीयचरणकमला डॉ स्वरवन्दना माता च। अवसरेऽस्मिन् पितरौ श्रीसालिकतिवारी जननी स्वर्गीया दुर्गावती देवी वचनकुसुमप्रकरप्रदानेन मुहुर्मुहु: प्रणम्यौ। सरसमधुरभोजनपानमिवानवरतं सुमधुरललितवचनं ददाना सुनीत्राख्या भार्या चन्द्रमुखो विभवतिवारी आत्मजो मम विशेषत: धन्यवादार्हौ, भ्रातर: श्रीसन्तोष–प्रमोद–विनयतिवारीति चान्ये सर्वे सहृदया: पारिवारिकजनाश्च सादरं प्रणम्यन्ते, येषां सदसद्भावना मयि नितरां छायैव संचरति। बड्वश्शुभचिन्तका

अस्यारविन्दस्य मे, येषां नामग्रहणमत्र न कृतम्, कश्चिद् विस्मृतिं गच्छेदिति भिया। हृदयस्थास्ते नितरां वन्दनीयाः।

प्रकाशकः सत्यम् पब्लिकेशन हाऊस, देहलीस्थः प्रगतिशीलपाण्डेयमहोदयो धन्यवादार्हो येन यथासमयं प्रकाशनं कृतम्।

वन्द्या नित्यसाधुजनसङ्गमपूतमनसस्सहृदयाः! हृद्भावनानर्पयन् मातरं शारदां वन्दमानो वच्मि यदयमुपन्यासो कीदृश इति नाहं जाने, भवन्तो नीरक्षीरविवकेकिजना एवात्र प्रमाणम्। किन्तु अनवरतकृतपरिश्रमसन्तुष्ट–कृषकोऽनुमाति कृषिफलपूर्णतामितिधियामन्दमानन्दं हृदि समनुभवन्नहं भगवन्तं विश्वेश्वरं प्रार्थये। आशासे यदमरवाणीगङ्गाजलसंक्षालितज्ञानेन्द्रियाणां चेतांसि हा हन्त! नूनमेव हरिष्यतीति।

मार्गशीर्षत्रयोदशी
रविवासरः २०७३

विदुषां वशंवदः
**अरविन्दकुमारतिवारी**

# विषयसूची

## ॥ मङ्गलाचरणम् ॥

वासुदेवं गुरुं नत्वा कृष्णकान्तं च शङ्करम्।
लोकावलोकनोद्भूत—हाहन्तेत्युपनस्यते।।१।।

वन्दे मातरं नित्यं जननीं लोकदेवताम्।
यां विना सर्वलोकोऽयं वृथा भवति निश्चितम्।।२।।

सारयत्सर्वतो गन्धं सुखयत्सर्वमानवान्।
विकसेत्संस्कृतं पुष्पं सम्पूर्णे भूमिमण्डले।।३।।

कवित्वं वन्द्यते तस्य सुकवेरेव केवलम्।
रससिद्धस्य लोकेऽस्मिन् सहृदया मुदिता यदि।।४।।

कविताकामिनी पाणौ माल्यमादाय चिन्वती।
वरं स्वयंवरे मुग्धं वृणोति सुकविं बुधम्।।५।।

मानवं मा नवं प्राप्य विस्मर मित्र मित्रताम्।
सुलभाषत्रुता प्रायः सन्मैत्री दुर्लभामृता।।६।।

नीरसः सरसं काव्यं कविर्दृष्ट्वा न मोदते।
क्व पश्यति शुभाङ्गीं भो विलोचनो विलोचनाम्।।७।।

मङ्गलं सुहृदां नित्यं मङ्गलं विदुषां द्विषाम्।
मङ्गलं भारतीयानां भूयाद्विश्वस्य मङ्गलम्।।८।।

समवायस्तु सम्बन्ध आवयोर्यश्च लक्षितः।
हा हन्त स कथं मित्र संयोगं समुपागतः।।९।।

धृष्टे मदीयगृहिणि क्व गता विहाय
मां प्रार्थिनं सहृदयं हृदये निधाय।
त्वत्पादरागमधुपं कविते ऽरविन्दं
शब्दार्थबाहुयुगलेन चिरं रमस्व।।१०।।

विलसत्सु सहस्रेषु मित्रेषु कविबन्धुषु।
न कथं गृह्यते रागात् कविताकरपल्लवम्।।११।।

प्रथमो निश्श्वासः

## ग्रामवर्णनम्

वायुः शुद्धतमो गृहे सुगृहिणी माता पिता बान्धवाः
सच्छ्रद्धा स्वगुरौ सखे च तुलसी पूज्याङ्गणे फुल्लिता।
होलीदीपमहोत्सवोत्सलसितश्शस्यादिसम्पूरितो
ग्रामो नैव सुखाकरो नगरतां यातीव हन्ताधुना।।

भो! भव्यभूतलभूषणभूत! भूतभावनभावनाभरितभारतीय! भौतिकतत्त्वोद्भूत! अद्भुतभावोद्भावक! भोगासक्तस्सन् व्यर्थं त्वमात्मानं श्रेष्ठं मन्यमानो मात्रैका—धिव्याधिजराजननमरणादिरूपजीवनोद्याने पुत्रपौत्रबन्धुमित्रबान्धवपत्नीकुसुमानि पश्यन् श्रीमच्छङ्करसदुपदेशांश्च विस्मरन् भ्रमसि। यत्रोक्तं तेन—

'भज गोविन्दं भज गोविन्दं गोविन्दं भज मूढमते'! ध्वनिरयं सद्यस्त्यक्तनिद्रेण मयानाक्षालितनयनमुखादिनाश्रूयत। समुपजातविस्मय इतस्ततोऽभिपश्यन् नैवावलोकयामि यत्केनाहं सम्बोधितोऽस्मि, अप्राप्तमिहिरपूर्णप्रकाशपुञ्जप्रभाते किमहमव्यक्तरवखगैर्व्यक्तवाचा बोध्ये वा दिनकरसहस्रकिरणजालभयपलायमानक्षुभितहृदयराकापतिना ज्ञाप्ये किं वा सकलजन—विश्रामस्थलीरजनीरमण्या तत्त्वज्ञानाय प्रेर्ये वेति विकल्पयन् सर्वमपि पश्यन्नात्मानं न विभावयामि। बहुविधे विचारिते सति विज्ञापितोऽहमात्मना यन्मां गद्यमेवमवादीद् गद्यलेखनाय। ततो लेखिष्यामो गद्यमिति विभाव्य सम्पादित ग्रार्हस्थ्य—जीवनोऽध्यात्मजिज्ञासापिपासापरिशमनाय तीर्थात्तीर्थं पर्यटन् काशीं जगाम। काशी नाम मोक्षदायिनी नगरी। यत्रागता सुजना लभन्ते मरणान्ते कैवल्यमिति।

अस्ति विश्रुतविशालविश्वविश्वम्भरारमणीयविपुलांचलभारतवर्षलालिम ललाटपट्टांकितदेदीप्यमान—तिलका सततसोत्साहसादरसुरसरिच्छीतलसलिलसंक्षालित समग्रसाधुसुजनसद्भावस्नेहसभाजितानातिदूरं नवजीवनदायिनी गङ्गायमुनासङ्गमपावित तीर्थराजप्रयागाद् दक्षिणदिशि आध्यात्मिकाधिदैविकाधिभौतिकतापत्रयसमुन्मूलनसंलग्न त्रिशूलवतो भगवतो निखिलगङ्गाजलतरङ्ग—भङ्गजटेः धूर्जटेर्देवगुरोरिवाखिलमनुष्यज्ञानदायि

काशीहिन्दूविश्वविद्यालयस्य संस्थापकस्य महामनसो मदनमोहनमालवीयस्य ज्ञानोपवने परिभ्रमन्नहमेकदा लघुशिलासन्दीमुपाविष्टं कदाचित् खिन्नमानसं विलोलकचकलापं जीर्णशीर्णशरीरपटं परिवृद्धश्मश्रूजालावृतवदनं लम्बहस्तपादाङ्गुलिनखं कृषकायवन्तं किन्तु सुगठितदेहावयवं कदाचित् कण्डूयमानपृष्ठस्कन्धोदरादिदेशं कदाचिद्विवृद्धरोषाक्षियुगलेन लोष्ठहस्तो मार्गेणाटतो जनान् भाययन्तं शनैः शनैः संस्कृताङ्गलहिन्दीप्रभृतिभाषाभाषणचतुरं स्वयमेवात्मानात्मानमालपन्तं कदाचिदाकाशमण्डलनिबद्ध–दृष्टिं किंचित्सरोषमभिवदन्तं क्षणमेव गच्छतो यात्रिणो दृष्ट्वा दक्षिणहस्ततर्जनीं दर्शयन्तं कदाचित् स्पृशन्तं कार्क्ष्येणागच्छन्तं मामवलोक्यान्यत्र गमनचित्तवृत्तिं मन्ये क्षुब्धहृदयं केनचिद्बलवता रिपुणा दलितनिर्दोषजनमभिलक्ष्यानायाससंजातकुतूहलः सहसोपसृत्य कोऽयमसौ कथमस्येदृशी दशेयमिति जिज्ञासमानस्तं यूनमपृच्छम्। कस्त्वं भोः? कथमेवं लक्ष्यसे? असकृन्मयि पृष्टेऽनवरतमवलोकनतत्परेण तेन हृदयनिहितदृढशूलसहस्रेण रोषाग्निना दह्यमानदेह इव दीर्घं निःश्वस्यावादीन्माम्।

श्रूयतां मदीयसकलसजीवाकृत्रिमवृत्तान्तज्ञानोत्सुक! आकर्ण्यते आर्यावर्तैकालङ्कारभूता ज्ञानविज्ञाननिधाना समस्तकलाकौशललावण्यमयी सुररमणीवागताभ्यागतातिथिचित्ता–कर्षणचतुर–विलासिनीवासङ्ख्यमहाकविवृन्दकाव्यविषयवनितेव पाटलिपुत्रनाम्नी नगरी। याधुना पटनेतिसंज्ञया विहारराज्यमुकुटमुक्तेव ज्ञायते।

असौ हि विहारप्रदेशः परमपावनहृदयवतां महावीरगौतमबुद्धादीनामूर्ध्वस्रोतसां ज्ञानिनां संसारमूलोच्छेदकानामग्रण्यानां तपस्स्थली। परमद्यापहृतनिखिलविभूतिरिवासौ प्रदेशः स्वदीनतां प्रकटयन् दरिद्र इवाभितो रोदिति। अस्यैव विश्रुतो जनपदो गोपालगंजा–भिधानः, यत्र पुरा निर्मलमतयो महर्षय इव यज्ञयागक्रियापाटवाः त्रिविधतापापहरणकुशला वित्तरमणीरागस्पृहाशून्या अपि ज्ञानेऽभिलाषवन्तः प्रतिकूलवेदनीयदुःखावच्छेदनदक्षाः सन्तोऽपि विद्वज्जनमतमण्डनाः, कदाचिदक्षिणा अपि क्रतुक्रियासम्पादनतत्पराः स्वस्वज्ञानभाभिरलंचक्रुरिमं प्रदेशमेव नापितु समस्तामपि भारतभुवम्। किन्तु समयो हि परिवर्तनपथगामी नैकामेवावस्थामवलम्बते। शनैश्शनैर्मानवीयविगर्हितदुर्गुणशत–वायुझंझातीव्रेण गुणवृक्षो बलात् पातितः। यद्यपि ज्ञानगङ्गा कुत्र गतेति न जानीमोऽद्यापि तथापि तज्ज्ञानप्रवाहपरिपूतनगरीयमधुनापि विद्वांसं सुतं जनयत्येवेत्यत्र न संशीतिलेशः। एतज्जनपदाश्रिता मदीया मतिधानी जन्मभूः, यत्र मया स्वबालसुलभखेलनं खेलितम्। विलक्षणं हि ग्राम्यजीवनं सखे! तदिदमाकर्णय–

कमनीयकाकलकोकिलकुलकलितकूजनं कुपितकमलास्यकामिनी–

कम्रविकसितकामिकिंकरकम्पनं कुत्सितकर्मकृपणं कुकृत्याकालकालकवलितक्रन्दनं कुमतिकर्तककोमलकृष्णकथाकथनं खेदाखिन्नखर्वखगगमनगानगुंजित गगनं चंचलचंचुमच्चटकाचुंकृतिचमत्कृतं चर्वणीयचूतमंजरीच्यवनरसपान—च्युत मधुमासमत्तमुखरमुग्धमधुपच्छत्राच्छादितदिनम्, अजाल्मजालजितजनमानसं, मोहनीयमहनीय मधुरहोलादिमहोत्सवोत्सः,दीपावल्यादिपरमपावनपर्वगणेशचतुर्थीहरितालिका प्रभृति—वरणीयवृत्तविवृद्धि—विविधविबुधव्रतं प्रतिकणं निहितं तदेव ग्राम्यजीवनं मन्ये, यत्र मया यापितं नैजं शैशवम्। अहो शैशवमनिर्वचनीयम्। तदित्थम्—

अंगुष्ठं स्वमुखे निपीय हसनं पीत्वा च मौनं पयो
रुष्टे भीषणरोदनं गुरुजनैः संलोभनं वस्तुभिः।
प्रेम्णा क्रीडनकैरहो मृदुतमे क्रोडे नवं खेलनं
वात्सल्याब्धिनिमज्जनं क्व गतवत्तच्छैशवं जीवनम्!!।

किञ्च बाल्यमपि स्मरणीयमेव सखे!

अहो! ललितलीलाललामललितलीलाधरललनबहुलबन्धुरं बाल्यमस्माकं यदनुस्मरन्नहममन्दमानन्दितो भवामि। मामकीनं मृत्तिकामयं गोमयोपलिप्तं शीतलं गृहं यत्रास्माभिः क्रीडितम्, तत्

श्रूयताम्—

वर्षागमे परकरं स्वकरेण धृत्वा—
कुर्वन् निरन्तरमिदं मुदिता वयस्याः।
बाल्ये सखे सुखदनर्तनमद्य रम्यं
दृष्ट्वा सुवर्षणमये विकलीकरोति।।

चिन्तामुक्तवयस्यखेलनमहो वृक्षाच्च वृक्षान्तर—
मारूह्याद्भुतकूर्दनं सरिति तन्मध्यन्दिने चापलम्।
ग्रीष्मे वानरवत्सखे प्रतिदिनं गेहाद् गतं चोरव—
न्मित्राणां भवतां तनोति हृदये शीते न किं विस्मयम्।।

आगत्यागत्य कृताशनाः बाला वयं परस्परमन्वेषयन्तो निलीयमाना

देहलीभीत्तिभवनादिषु आदिनमटामः स्म। यदा–कदा धावन्तः क्रीडन्त उत्पतन्त इव च मिथो ग्रामाद् बहिर्गच्छन्तः पश्चिमदिशि सुविस्तृते सरसि स्नात्वा प्रचण्डरवितापमये ग्रीष्मदिवसे भ्रमन्तो गृहं निवर्तामहे स्म, पितृबन्धुजनैर्मधुरं ताडिताः किञ्चिद् भुक्त्वाशनजातं मातृस्नेहप्रमार्जितनयनजलबिन्दवः पुनस्तथैवाचरितुं लग्नाः सानन्दं भ्रमन्तः सायन्तने निजगृहमाविशामः स्मेति सम्यक् स्मरामि। कदाचित् कन्दुकेन क्रीडित्वा धूलधुसरितदेहाः, कदाचिद् गुल्लिकादण्डखेलनपरितृप्तहृदयाः, कदाचित् शारीरबलवर्धयित्रीकबड्डीखेलद्वारा स्वेदार्द्रशरीरा भगवति भास्वति उदयेतराचलं प्रस्थिते जलयन्त्रपरिक्षालितनिजहस्तपादमुखा गृहमागत्य मातृदत्तभोज्यपदार्थातितुष्टा दीपं प्रज्ज्वाल्य किञ्चित् पठितुं मग्नास्तारस्वरेणाक्षराणि श्रावयन्तोऽग्रजं पितरं मातरं पितामहं प्रतिवेशिजनं च रंजयामः स्मेति, न काचिद् देहगेहवसनादिचिन्ताक्लेशस्त–दानीमासीत्। सर्वत्र स्वातन्त्र्यस्य साम्राज्यं लक्षितं भवति स्म।

अहो! अनिर्वर्णनीयं बाल्यजीवनसुखवैभवम्–

प्रतिदिनं देवपूजनगमनशीलां मातरमनुगच्छन्तो वयं लघुपूजनसलिलपात्रहस्ताः शिवालयं गच्छामः स्मेति भोः। विहितदेवसमर्चया मात्रा भगवन्तं प्रणमेति प्रोक्ते बद्धांजलिपुटैरस्माभिः साष्टाङ्गमभिवाद्य प्रणम्य च लब्धप्रसादाः प्रीतमनसः पूजनपात्राणि मात्रे समर्प्य क्रीडितुमाकारिते मित्रे कस्मिंश्चित् मात्रा निवार्यमाणेऽपि मातश्चलाहमागत इत्युक्त्वा मित्रमण्डलीमाहूय पुनः पुनो भ्रमामः क्रीडामः स्म चेति।

अहो! समागते सन्ध्याकाले ग्रामस्थश्रीराममन्दिरगमनमपि न विस्मरामि, यत्र हि पूजकसमारब्ध–घण्टिकारवश्रवणव्यग्राः सम्पादितनिजकृत्याः प्रसादलोलुपा मन्दिरशिलातलमारूह्यार्चकगीयमानश्रीराम–स्तवनगानमग्ना मुखेन स्तवं पठन्तः संकेतेन मित्रवर्गं काक्ष्येण पश्यन्तः समाधिमभिनाटयामः स्म। आरार्तिक्यान्ते गृहीतमोदकगुडर्तुफलास्ततो स्वकगेहमागत्य पुनः स्वपठनकर्मणि व्यापृता भवामः स्मेति सर्वमपि वृत्तजातमिदानीं मामानन्दयत्येव। एवमेवाहो! गोचारणमस्माकन्तु अवर्णनीयमेव मन्यताम्, गृहीतलघुयष्टयो वयं यदा–कदा गोचारणानन्दमपि यथावसरमनुभवामः स्म। क्षेत्रेषु निर्यातासु गोषु विगतगोचारणचिन्ताभारा वयमेकत्रीभूय कमपि खेलमाश्रित्य खेलामः स्म, यत्र वृक्षशाखाम् आरूह्य कपिवत् कूर्दन्तो ग्राम्यजनसुलभखेलनसुखमनुभवामः स्मेत्यधुना संस्मृत्य संस्मृत्य रोमांचितो भवामि।

सखे! समागतेऽवसरविशेषे मेलागमनकाले गृहजनहस्ताङ्गलिमाधृत्य तत्र तत्र गत्वा मिष्टान्नानि चोपभुज्य क्रीडनकानि क्राययित्वा सानन्दं विहसन्त आलपन्तो

गृहं प्रति निवृत्ता भवामः स्मेति कस्य न सुखयति चेतः। निर्गतो दूरमधुना असीमानन्दबाल्यकालोऽसौ। सुखोपनीतबाल्यकालोऽहं यथोचितं अक्षरादिज्ञानमवाप्य युवावस्थामारूढो ग्रामाद् ग्रामान्तरं सप्रयोजनं गतो ग्राम्यजनजीवनं साक्षात्कृतवान्, तत्तु नूनमेवास्मत्कृते विस्मयहर्षखेदवाहीति वक्तुं शक्यते।

मित्र! कुत आरभै ग्राम्यजीवनकथामिति विभावयन् पुत्रोत्सवमेव वर्णयामि। जाते पुत्रे प्रसन्नवदना गृहसदस्याः प्रतिवेशिमहिलाः स्वगेहे आहूय मङ्गलगानायोजनं कारयन्ति। इमाः पितामह्यः पितृस्वसारो भगिन्यो ननान्दारः पितृव्याः स्नुषा भ्रातृजायाश्च प्रफुल्लितास्याः सुतमुखमवेक्ष्य शुभकामनाशीर्वादप्रदगानानि सस्वरं गायन्त्यः शोभन्ते। आसु काचिन्महिला सोहराख्यं विशिष्टं गानं गायति। तद्यत्—जीवेदयं प्रतियुगमहो भवनस्य भाग्योदयः।

विभवो रघुकुलरामतुल्य एषः।<br>
कुलदीपकोऽभिनवः।।<br>
तदिदमेव सखे!<br>
जीवेदयं प्रियशिशुश्शरदश्शतानि।<br>
लब्ध्वा यशांसि विपुलानानि सुविस्तृतानि।<br>
वंशस्य दीपकवरो विभवकुमारः<br>
कृष्णोपमो रघुकुलोत्तमरामतुल्यः।।

अत्रैव तु श्रव्यमेतदपि—

काचिन्नृत्यति गायतीह तरुणी तालिं ददाना शुभा<br>
वृद्धा कापि च सोहरं गृहपतिं ब्रूतेऽपरा चाशिषः।<br>
कश्चिद् भोजय भोः सखे सुमधुरं जातस्सुतस्त्वद्गृहे<br>
हन्तेत्थं सुतजन्मनि प्रमुदिता पुत्रीजनौ दुःखिताः।।

अन्या काचिदवगुण्ठनवती सानन्दममन्दं नृत्यति ललितम्, अपरा तालिकां वादयति, काश्चन ग्राम्यवाद्ययन्त्रं वादयन्त्यः सौभाग्यवत्यो नार्यः सर्वासां सौभाग्यकामनां कुर्वाणाः सिन्दूरेण तैलेन च परस्परं शिरो भूषयन्ति। समुत्फुल्लकपोलः पितामहः प्रमुदितमुखो जनको व्यस्तः पितृव्यो हसन्तो वदन्ति मुदञ्च लभमाना विलोक्यन्ते वितरन्ति च वस्त्रं भूषणं धनं यथाशक्ति प्रियजनेभ्यो मोदकैस्साकम्। परन्तु हन्त! पुत्रीजन्मकाले

इमे विपन्मलिनमुखाः क्षीणशक्तयो हृतसर्वस्वा इव बहवो निन्दन्तो भाग्यमभ्यन्तरतो विशालासह्यदुःखदुःखिता बाह्यत आनन्दिता वयमिति प्रकटयन्तः कस्मिंश्चित् कोणे स्थिता उपविश्य वा शिरोदेशं कण्डूयमाना धून्वन्ति हृदयम्। हन्त! कीदृशोऽयं लोकः! यो हि पुत्रीं नाभिलषति। यं च सद्योजातं सुतं कुलदीपकं मन्यते स कियान् भवति कुलदीपक इत्यपि विज्ञायत एव। सखे! परम्परेयं हातव्या, पुत्रीजन्मकालेऽपि तथाविध उत्सव आयोजनीयो न तु रोदितव्यमिति।

वयस्य! आकर्णयेतोऽग्रे रुचिरं श्रोत्रपेयं विवाहवृत्तम्। श्रूयतामिदं—

दृष्ट्वा कस्यचिदेव शुक्लचिकुरः पाणिग्रहं विस्मितो
ग्राम्यो नैजविवाहचिन्तनरतः कृत्वा कपोले करौ।
निन्दन् भाग्यमसौ स्वयं गतवयाः जातसमाधिस्थिति—
र्व्यग्रो रोदिति सन्ततं सकरुणं मुग्धो वराकस्सखा।।१७

ग्रामे निवसन्नगृहीतोच्चशिक्षो विवाहोत्सुको व्यग्रो दृश्यते, चिन्तिताश्च तत्परिवारसदस्याः स्वस्वोपायानाविष्कुर्वन्ति। पितरौ स्वजनपरामर्शेन नगरे प्रेषयन्ति, मृषा वदन्तौ यदसौ धनमर्जयति मदीयः पुत्रः। स्वयं तद्व्ययार्थं प्रेषयन्प्रतिमासं धनं पिता येन केन समागतजनं विवाहायाकर्षन् वदति यत् प्रतिमासं मत्पुत्रो दशसहस्रं रूप्यकाणि प्रेषयति द्वितीये दिनांके, गृहे यद्यत् कृतं तत्सर्वं तेनार्जितवित्तेनैव, नास्माभिरिति प्रजल्प्य मिष्टं स्वादु भोजयित्वा च मध्यस्थेन पूर्वविचारितं वाचयित्वा समक्षं परोक्षं वा विश्वासमुत्पाद्य यौतुकादिकं निर्धार्य पाणिग्रहतिथिं पण्डितेनाविष्करोति।

यः सत्यं च मृषा मृषानृतमहो सिद्धं विधायाद्भुतः
तुष्टः संलभते समादरवचः पक्षद्वयं तोषयन्।
सद्यो जायत एव कोपकुपितः पाणिग्रहोच्छेदकः
मध्यस्थो बहुभावभंगिमभरो मान्यो धरादेववत्।।१८

नत्वा स्मितं स्पृशति पश्यति चात्मभावं
प्रीत्या प्रदर्शयति दिव्यदशां मनोज्ञः।
हस्तं करे धृतमतः सहसा निपीड्य
मध्यस्थ एव मुखरो मृदु भाषते च।।१९

मध्यस्थो नाम विवाहयोजको यो हि असद्वृत्तं युवकं सदाचारिणं,

मादकद्रव्यसेविनं मादकद्रव्यनामानभिज्ञं, वाचालं समुचितभाषकं, धनक्षयकारिणं मितव्ययिनं, सर्वदासत्यवादिनं सर्वदा सत्यवादिनं, युवतिजनलम्पटजनं कामपि समक्षं गच्छन्तीं न पश्यतीति अनर्गलं विश्वासोत्पादिवचनानि कथयित्वा तत्रोपविष्टेन ग्रामीणेन च प्रतिशब्दमनुमोदनं कारयित्वा सर्वं शोभनमस्तीत्युक्त्वा शीघ्रं विवाहो विधातव्य इति परामृशन् निगदति संयोगादयं सम्बन्धो दृष्टो हस्तान्निर्गतो न मिलिष्यति। किं चाग्रे वदति ललाटभङ्गं दर्शयन् एकोऽपरस्तद्ग्रामवास्तव्य आगत आसीत्, पंचलक्षपरिमितं धनमपि ददानोऽस्माभिर्निवारितस्तस्य कुलमन्वीक्ष्य न वयं सर्वत्र विवाहं कुर्मः। अपरः कन्याग्रामं गतो मध्यस्थो विशिष्टवागनधीतव्यवहारशास्त्रोऽपि सव्याजं समधिगतसकललोकव्यवहारपारंगतः कृतपरिकरबन्धः पाणिग्रहं विगतविवाहसमयमपि वाग्बलेन कारयत्येवेति नात्र सन्देहो विधातव्यः। असौ ब्रूते धूर्तमूर्धन्यः कन्यापितरं विहस्य साश्चर्यं करं स्पृशन् अरे भ्रातः! यो युवको दृष्टो भवता स्वकन्यकायै तद्विषये किं विचार्यते? नाहममुं वृणोमीत्युक्ते तस्मिन् बहुधा विबोधयति भोः! कथं स खल्वाट इति दृष्ट्वा, स्थूल इत्यवेक्ष्य? मैवं विचारय। सम्प्रति दूषितखाद्यपेयवस्तुजातं यद् वयमद्मः तत्प्रभावेण निपतन्ति कुन्तला दशवर्षदेशीयस्यापि, न चिकुरह्रास आयुर्निर्धारक इति, योऽसौ स्थूल इति प्रतीयते तत्र कारणमस्ति सर्वं तद्गेहे भोज्यं प्राप्यते प्रचुरमन्नं यथेप्सितं दधिदुग्धघृतं यद् भुंजानो जनो भवत्येव स्थूलः। भृत्याः सम्पादयन्ति कार्याणि, न स्त्रीणां ध्वनिरपि श्रुतोऽस्य गृहे। प्रतिवेशिग्रामेष्वपि पृच्छ्यतां कोऽपि दोषः शतशोऽन्वेषणे कृतेऽपि आचारविचारविषये कुलसन्दर्भे न लब्धुं शक्यते। महदायतनं भूमेरासीदस्येदानीमप्यस्ति। यावदन्नमस्योत्पद्यते तावत्तु समग्रेऽपि ग्रामे न भवति। मूषका अपि विडाला इवास्य गृहे दृश्यन्ते। अस्य पूर्वजा हस्तिप्रिया आसन्निति को न जानाति। स च युवकस्तथा सुशीलो यथा न कोऽपि अद्यावधि लक्षितः। कुपितेऽपि ज्येष्ठे भ्रातरि क्रुद्धे च पितरि न शिर उत्थापयति। सर्वथाहंकारशून्यो नगरादागच्छन् मार्गे मिलितान् प्रणमन्नायाति। वयन्तु पादस्पर्शपूर्वकं प्रणम्यामहे। लज्जालुर्विनयी मृदुभाषी सर्वेषामपि प्रशंसाभागस्ति। अन्ते प्रवचनप्रवीणो मध्यस्थोऽवलोकयन् कन्यापितृमुखं यथा भवद्भ्यो रोचत इत्युक्वा स्वकुशलवचनाकृष्टकन्या–पितरममिभभूय पुनर्विचाराय विवशीकरोति। निगृहीतोऽयमिति ज्ञात्वा पुनर्वक्तुमारभते न कापि चिन्ता कर्तव्या, कदाचिद् भवान् यौतुकविषये चिन्तयेत् तन्मयि निक्षिपतु। यावद् दास्यति भवान् तावत्तु तस्य वरेच्छोत्सव एव व्ययीभविष्यति। अहं तस्य बालसखो मदुक्तं नासावतिक्रामते। अतः क्रियतामयं विवाहः। हन्त! एवं कथयित्वा त्याज्यकुलेऽयोग्ययुवकेन साकं मध्यस्थो विवाहसम्पादने विजयं लभते।

सखे! एवमेव विवाहोच्छेदका अपि ग्रामे बहवो वसन्ति, ये निश्चिततिथिं

पाणिग्रहं किं वा समायोज्यमानं तिलकोत्सवं विवाहोत्सवमपि स्वकुटिलवक्तव्येन भिन्दन्ति छिन्दन्ति चेति। इमेऽसज्जनाः यदि विवाहात्प्राक् न पृष्टाः पूजिताः सम्मानितास्तदा ध्रुवमेव विपरीतमाचरन्ति।वदन्तीमे कन्याविषये न सा त्वद्गृहवधूयोग्यानवरतापणमेलादि भ्रमणाच्चलचित्रदर्शनादन्ययुवजनैः साकम्। न सा गृहसदस्येभ्यो बिभेति, यदस्यै रोचते तदेव करोतीयमिति विषये कश्चिदपि जनः पृच्छ्यताम्। अकथितमपि ज्ञायत एव भवद्भिधैरिति सारगर्भितं प्रजल्प्य सन्तुष्टिमवाप्नोति। एतद्वित्तान्तश्रवणविक्षुब्धो रोषाग्निरक्तनयनो मध्यस्थं गालिं ददानः कन्यापितरंश्च निन्दन् सभ्यजनेन मानयमानोऽपि न किमपि श्रोतुं प्रवर्तते।

यदि वरविषये वक्तव्यन्तदा वदति विवाहोच्छेदको यथेच्छम्—अरे महाशय! किं क्रियत इदम्। नास्य कुलं भवतां कुलसापेक्षं नात्र शिक्षितः कश्चित्, अतः स्वयमशिक्षितपरिवारे स मद्यपः सर्वदा चलचित्रदर्शनशीलश्चतुष्पथवासी निखिलदुर्गुणाचार्यो य एकदा ग्राम्यचौरैः सह सन्धिद्वारि निगृहीतो मयैव मोचित इत्यहमेव जानामि। गतवर्षे एवासौ स्वपित्रा सार्द्धमयुध्यत विषं च भुक्तवान्, पठेति यदा पितावादीत्तदा। तत्कथय किमयं रूपकुलशीलस्वभावशून्यो भवद्भिः पूज्यः कन्याविवाहविधिना।

किं चाग्र उत्फुल्लगलो निगदति—नास्य गृहे कश्चिद् विवाहार्थमायातो येन केन क्रीत्वा दूरदेशात् वानीय विवाह्यन्त इमे। अस्य पितामहो महान् मद्यसेवी वेश्यागामी चासीत्, येन सर्वा भूमि तत्तत्कर्मस्वेव विक्रीता। नैकमपि दिनं यस्मिन्नस्य गृहे कलहो न श्रूयेत। अये भ्रातः! भोक्तुमेकस्य दिवसस्य कृतेऽन्नमपि न मिलिष्यति गृहे, मूषका अपि रुदन्त्यस्य गेहे, निन्दन्ति चेममिति स्वयं गत्वा परीक्ष्यताम्।एवमुक्त्वा विस्मयोत्पादि भयसंचारि वृत्तमनुचितमभिधाय बहुधाा निवारयन् विवाहविच्छेदं कारयित्वैव परमां शान्तिमधिगच्छति। हन्त! धिग्विवाहकर्तकम्! साम्प्रतमल्पीयांस एव वंच्यन्ते मध्यस्थैर्विवाहकर्तकैर्न तु सर्वे।

वयस्य! सर्वमनुकूलं प्राप्य विवाहदिनांको घोष्यते, सादरं निमन्त्रणपत्राणि प्रेष्यन्ते सम्बन्धिभ्यो मित्रेभ्यश्च। अभिधानीयमेवाभिधीयतेऽधुना न विदितं सर्वं सखे! विवाहदिवसस्य प्रातःकाले मुहूर्त्तानुसारं भवति मृत्तिकाखननविधिः कश्चित्। यत्र कन्यापक्षीया महिला गायन्ति गानमिदं यद्धि विलक्षणं प्रतिभाति। तद्यत् ' कस्मिन् विपिने निवससि कोकिल कस्मिन् विपिने यासि?' अनेन गीतेन कन्याया दूरदेशवर्तिनीत्वं दर्श्यते निजपितृगृहाच्च पार्थक्यमभिसूच्यते। वरयात्राविषये मनोरंजकमिदमास्वाद्यताम्—

पूज्यन्तेऽत्र अजाः कृपाणकुसुमैर्जानीहि एवंविधा
अस्त्येषः समयः प्रयाहि चतुरैरुक्तो विवाहोत्सुकः।
मत्वा यत्करपीडनं चलसि भो नूनं करैः पीडनं
अश्वारूढवरो विचिन्तयति किं कुर्यां प्रभो भो वद।।२०

श्रूयताम्। निर्गच्छति वरयात्रा सज्जिता हस्तिनो धावन्तस्तुरंगमाः आभूषण सौन्दर्यवत्यो नवीन–परिधानरम्या युवतिजनाः मङ्गलगीतानि गायन्त्यः सर्वान् रंजयन्ति। मात्रा स्वस्रा भ्रातृजायया वा द्रव्याक्षतवर्षं सहर्षं कुर्वत्यो मुदं लभन्ते शिविकारूढवरे। ग्रामान्ते स्थिता वरयात्रा ग्रामीणैर्यात्रिकजनैश्चावलोक्यमाना महदानन्दमातनुते। वरस्तु विशिष्ट परिधानो धारितविवाहसूचक–मुकुटमालः स्थूलकज्जलरेखाक्षियुगलोदध्यक्षतपुष्पविहिततिल को मनसा कदाहं तत्र यास्यामीति चिन्तयन् समुच्छलत्प्रेमरसतरंगनिकरहृदयो मौनमादधानो हृदयेन भाषमाणस्तत्पलं वीक्षितुकामो विलोक्यते। अत्रापि मित्र! वक्तव्यमेव श्रावयामि। पुरा विवाहे पण्डितसभापि सश्रद्धमायोज्यते स्म, यत्र कन्यावरयोराशीर्वादो दीयते स्म, शास्त्रचर्चा शास्त्रार्थोऽपि विधीयते स्म। एतदनुष्ठानेन ग्रामीणानां शास्त्रपरिज्ञानं प्राप्यते स्म शास्त्रानुरागोऽपि लक्षितो भवति स्म। हन्त! नाधुना सभासौ नवनवतिप्रतिशतग्रामेष्वपि समायोज्यते पण्डितसभा तिष्ठतु दूरं विवाहसम्पादका विप्रा एव न प्राप्यन्ते विप्राणां ग्रामेष्वपि, विचित्रेयं कथा दशा वेति। क्वचित्तु पौरोहित्यकर्मदक्षमपि शीघ्रं सम्पादयेति निवेदयन्तो जना दृश्यन्ते। अहह! विलुप्यमानोऽस्ति संस्कारो देशात्।

श्रूयतामभिधानीयमिदानीं ग्रामस्य मित्र!। ग्रामेषु प्रायः सर्वोऽपि वर्गः कृषिकर्मनिरत एव दृश्यते। पण्डिता अपण्डिताः, शिष्टा अशिष्टाः, परिश्रमशीला अपरिश्रमशीलाः, सुजना दुर्जना जना निवसन्ति ग्रामेषु। अत्र हि धनिनो निर्धनान् स्ववशीकृत्य तिलवत् पीडयन्तो मुदं लभन्ते, निर्धनश्च वर्गस्तप्तकटाहप्रक्षिप्ततिल इवाजीवनं ज्वलन् मृत्युमुपयातीव। वित्तकुसीदाबद्धो निर्धनो धनिनः सर्पगृहीतमूषिक इवात्मानं मोचयितुं यत्नवानवलोक्यते।

श्रूयतामिदं सखे!

ग्रामे वित्तविहीनमानववरो लब्ध्वा धनाढ्याद्धनं
निर्वर्तयितुमहो कदापि बहुभिर्यत्नैर्न पारंगतः।
हा हा मत्कुणदुःकुसिदिधनिना संचूष्यमाणश्चिरं
दत्त्वा मूलधनं रुदन्न सहते संपीडितस्तापनम्।।२१

अहह! धनिजनच्छलच्छद्मविक्रीतसर्वस्वो निर्धनः सपरिवारो दासत्वं भजमान इव धनिजनदृष्टेः निलीयमानो धृतः कदाचित्तथा क्षमामभियाचते यथा यमराजसैन्यनिगृहीतो मृत्युमुखगतो जीविताशां कुरुते। परन्तु साम्प्रतमिदमवलोक्यते यत् यत्र—तत्र अति निर्धना धनिनजनानिति। केचन निजबाहुबलसमुपार्जितधना निर्धनाः सुखं भुंजाना धनिजनानतिशयाना अक्षिगततृण इव तथाकथितधनिजनवर्गं परिपीडयन्त्येव। गतोऽसौ समयः साम्प्रतम्, इमे हि परिनिष्टभूतयो धनिनो निजपराक्रमार्जितसम्पदो जनान् ये पूर्वं निर्धना दलितास्तान् सेवमाना यथा व्याघ्रान् शृगालास्तथानुधावन्ति। साधु कृतं दैवेन!

अयि सखे! मयात्र ग्रामे सम्पादितनिजगृहकृत्यकार्या नार्यो या कस्मिंश्चित्स्थाने मण्डलीं निर्माय प्रतिवेशिगृहजच्छिद्रमन्वेषयन्त्यो वर्णयन्त्यो वात्मानन्दमनुभवन्त्यः आसनमुपविशन्ति। आस्वपि स्वानर्गलप्रलापविषयविशदीकरणदक्षाः पिशुनजिह्वाः परजननिन्दनपेयपानपरितृप्ता विस्मृतस्वगेह—कृत्या वारं वारमाकार्यमाणा अपि न ततो निवर्तन्ते हरितशस्यनिचयचर्वणरता अजा इवेति।

मित्र! हन्त! प्रतिवेशिगृहसम्पदुत्कर्षदर्शनसन्तप्तमानसा बहवो ग्राम्या जना सन्त्यक्तनिजाहार—विहारव्यवहाराः पादपपाण्डुपत्राणीव क्षीयमाणाःकिञ्च तुषराशय इव प्रतिपलं दह्यमाना लक्ष्यन्ते। अकारणप्रताडनाप्रपीडितपरिवारसदस्योऽपि दुर्मतिजनं तमभिभावकजनमेव प्रतिबिम्बमिवानुसरन्ति। तैस्तु पूज्यन्ते देवाः, मान्यन्ते ग्रामचतुष्पथदेवताः, तोष्यन्ते दानभोजनादिना विप्रपुरोहितादयः, सत्क्रियन्ते तान्त्रिकाः, आकार्यन्ते लुण्ठकाश्चौराः, प्रेष्यन्ते वंचकाः स्वप्रतिवेशिजनधनबलप्रहाणायेति। अहो! विचित्रा दैवी लीला। तद्धनं यथा क्षियेत तथा प्रयतन्ते दुर्जनाः अतएवाहेतुकं विवदन्ते कुक्कुरा इव, अनर्गलं भाषन्ते प्रमत्ता इव, उत्प्रेक्षन्ते सरोषं शत्रव इव, सर्वदैव दोषाविष्करणं कुर्वते दुष्टा इव एवम्प्रकारेण दोषमुत्पाद्य प्रतिवेशिना साकं कलहायमाना ग्राम्यपंचायतनमनुधावन्ति।

इदं हि पंचायतनं नाम तथाकथितबाहुबलिच्छलिदुष्कृतिपरायणमहावंचकपटुजन समूहः, यत्र विवदमानानां धनानि अपह्रियन्ते मार्जारप्राप्तापूपा इव, बलवतां पक्षाः समाश्रीयन्ते पिशुजजनेन स्वस्वामिप्रशंसा इव,स्वजना लाभेन पुरस्क्रियन्ते सर्वकारेणा योग्यजनपुरस्कार इव, निर्बला हन्यन्ते हरिणशावका इव व्याघ्रेण, सुजनास्तिरस्क्रियन्ते मद्यपप्रलापा इव, दोषबहुला निर्णयाः श्राव्यन्ते पक्षपातिभिः, पक्षद्वयादपि महदुत्कोचप्राणैः निर्णायकैर्यथेच्छं वित्तानि प्राप्यन्ते। सौभाग्यादेव कदाचिन्निर्णयो निर्मत्सरैः सज्जनवृन्दैः सत्यतयोद्घोष्यते।

इयमसूया नात्रैव विश्राम्यति, ईर्ष्यालुजनोद्विग्नासह्यकृत्यव्यथितचित्तप्रत्युत्तर जनितेन केशाकेशि दण्डादण्डि मुष्टामुष्टि युद्धं प्रवर्तते, युद्धं हि नाम नैव शान्तेर्विकल्पः। घातप्रतिघातघातिता भग्नहस्तपादास्थिमांसाः, भग्नविस्तृतललाटाः, रक्तनिष्यन्द विकरालशरीराः परस्परं गालिदाननिरता अपशब्दकोषाः क्रन्दनलग्नस्वजनमातापितृ बन्धुबान्धवाश्चिकित्सालयमनुधावन्ति। पश्यत्सु ग्रामजनेष्विदं सर्वं प्रवर्तते। एषु कश्चिद् वर्गः आरक्षिस्थानं प्रति पलायमानः' त्वां धरण्यां प्रेषयामि, तव कुलमेवाभिनाशयिष्यमि, न ते वंशे कश्चित् मृतपितृजनजलदायी स्थास्यति तथा प्रयतिष्ये' इतिभयप्रदवचनशीलोऽन्ये च भाययन्तः प्रतिवेशिनः गृहीतयुद्धजीर्णवस्त्रा निपतद्रक्तबिन्दवो वन्यजीवा इव इतस्ततो धावन्ति। अत्रान्तर एव दूरभाषाभिसूचितारक्षिवर्गः सद्यः समायातः उभयपक्षीयान् शकटमुपवेश्य नयति, तत्र चारक्षिणः उभयपक्षतो धनमादाय भाययित्वा च मोचयन्ति, अन्यथा कारागारे निक्षिपन्ति।

श्रूयतामिदं सखे—

कृत्वापराधमधुना बहवो मनुष्या<br>
आरक्षिदण्दशतकं नितरामवाप्य।<br>
दत्वा गृहस्य बहुसंचितवित्तमेव<br>
हा हा हता धृतललाटकरा रुदन्ति।।२२

कारागारो हि नाम लौकिको नरको यत्र सर्वं सह्यते पीडनकम्। जना यत्र पशव इवानीप्सितं भुंजते, दूषितं पिबन्तीव जलं, सर्वकारप्रदत्तवस्तूनि नात्र प्रदीयन्ते। धनलिप्सवो अधिकारिणस्तु धनांशत्रयं स्वयमेव भक्षयन्ति, अतः शेषधनेन पशुग्रासवद्भोजनमेभ्यो दीयते। कारागारगतानान्तु कथैवातिविचित्रा, दौर्भाग्यमेषां नात्र शयनाशनादिसुव्यवस्था दृश्यते। इदं सर्वमपि दुःखजातमनुभूय प्रतिपलं विषीदन्तो रुदतस्स्वजनवियुक्ता आत्मीयबन्धुवर्गमिलनोत्सुका येन केन प्रकारेण ततः आत्मानं रज्ज्वाबद्धमर्कट इव मोचयितुमीहन्ते। एते आभूषणभूभवनमहार्घ—वस्तुविक्रयप्राप्त धनेन प्राड्विवाकानधिकारिणश्चसन्तोष्य तत्प्रयासेन मुक्ता गृहमागता मिथोऽधिक्षिपन्ति उपालभन्ते चेति।

इमे प्राड्विवाकास्तु हन्त! श्रूयताम्—

वाक्कीलो नरकुंजरो जनममुं कृत्वा करेऽनारतं<br>
नित्यं पीडयतीह तप्तमचिरं सम्भाययन् धूर्तराट्।

न्यायाधीशकरार्पणेन सततं गृह्णाति सर्वधनं
ग्राम्यो मूर्खशिरोमणि: प्रतिपलं धृत्वा कचं रोदिति।।२३

प्राड्विवाकास्तु सर्षपं पर्वतीकृत्य पर्वतं च सर्षपीकृत्य साधारणमभियोगम–साधारणं विज्ञाप्य विवदमानान् भयाक्रान्तान् विधाय सर्वस्वापहरणकुशला:'मा भैषी:' इत्युक्त्वा परस्परं मिलित्वा इक्षुदण्डमिव चोषयन्ति। इमे तु साम्प्रतं धनलिप्सून् न्यायाधीशानपि स्ववशीकृत्याल्पकालीनमभियोगं तारिकामाध्यमेन चालयन्तो वर्षाणां दशाधिकं नयन्ति। इमेऽभियोगग्रस्तजनप्राप्तधनानि मिथो विभज्य सुखं जीवन्ति। कदा लोकोऽयमिदं ज्ञास्यतीति न जाने?

अहो! ग्रामेषु धान्यशस्यारोपणतत्परश्रमिकाभिनन्दनार्थदेवेन्द्रकृतसलिलवर्षण–समुत्थितहर्षप्रवेग–कम्पमानकृषकवनिताजनगीयमानलोकगीतोल्लासघूर्णमानसमग्रदेहा वयं 'श्रेष्ठो मानुषो लोक इति साक्षादनुभवाम:।'

सखे! कथं नानन्ददायी ग्रामोत्सव:? उत्सवो हि नाम हृदयाह्लादनतत्परो मानवक्रियाविशेष:। समागते सुरभिमासे वसन्ते प्रसृतसमस्तवातावरणसुगन्धिनि आयोज्यमानो होलोत्सव: कस्य न सचेतसश्चेतश्चमत्करोति!

श्रूयतामिदं वयस्य तावत्–

वस्त्रं नवीनमपि ते परिधाय सर्वे
गत्वा सुपूज्यमनुजान् शिरसाभिनन्द्य।
ग्रामे सदैव मनुजास्तु मुदं लभन्ते
होलाशुभावसर एव ददाति सौख्यम्।।२४

प्रौढाश्च वृद्धशिशवो बहुधा च नार्यो
मद्यं निपीय विविधं विजयां च भुक्त्वा।
नृत्यन्ति चाद्य मधुरं च विवाद्य वाद्यं
होलाशुभावसर एव ददाति सौख्यम्।।२५

धूलिं क्षिपन्ति च शरीर इमेऽपि पङ्कं
होलां विधाय पुरुषाश्च तदाथ शुष्काम्।

वक्तव्यवाचमपि ते न वदन्ति केचिद्
होलाशुभावसर एव ददाति दुःखम्।।२६

दृश्यं च दुःखदमिदं भवति प्रचण्डं
कोलाहलं च कुरुते मनुजस्तदानीम्।
देशे श्रुतं मम यदा बहवो मृतास्ते
होलाशुभावसर एव ददाति दुःखम्।।२७

नैतद् विधेयमधुनासुखदायि यत्स्यात्
वैरं विहाय दनुजा मनुजा भवन्तु।
होला सुशिक्षयति सन्दिशति प्रमत्तान्
वाच्या तदैव सकलैः सुखदा च होला।।२८

परिधाय यथासामर्थ्यं वस्त्राभूषणानि बालवृद्धयुवानो महिलायुवति—वर्गश्च महत्यस्मिन्नुत्सवे मिष्टपक्वान्नं प्रकामं चोपभुज्यान्यांश्च भोजयित्वा रक्तपीतहरितगुलालचूर्णलिप्तदेहा मर्कटमुखा आदिनं भ्रमन्ति नमन्ति ज्येष्ठान् आशीर्वादयित्वा अनुजानिति। प्रातरेवास्मिन् दिने बालका युवानश्च गृहीत—धारायन्त्ररक्तपीतहरितकृष्णवर्णमिश्रितसलिलाः सलीलाः निलीयमाना अन्योन्यं प्रक्षिपन्ति मुखे चाङ्गेषु प्रलेपयन्तो विहसन्त आनन्दसागरनिमज्जनं कुर्वन्ति। क्वचित्तु ढोलझल्ल—रीप्रभृतिग्राम्यवाद्य—यन्त्रपाणयस्तद्वादनकुशला होलामधुरसरसगानगायनपरजननर्तनोत्प्रेरकाः सुखदहोलागानश्रवणव्याकुलाश्च केचिन्मण्डलीं निर्माय प्रतिगृहं गत्वा द्वित्राणि गानानि प्रगायन्ति, यत्र तद्गानरसपानमत्ताः त्रिचतुराः पुरुषाः स्त्रीजनरूपमाविष्कृत्य नर्तकीव गात्रविक्षेपकटिमूर्च्छनक्रिययानन्दयन्ति अतिरंजयन्ति च जनानिति। गायकेषु कश्चन जोगिरेतिमनोरंजनवचनप्रवीणो भ्रातृजायामभिलक्ष्योच्चस्वरैः प्रेमरसभरितानि वचांसि श्रावयति यत्र जना 'भलाजीभलेतिशब्दसमूहै—र्विपुलरवमाविष्कुर्वन्तोऽनिर्वच नीयां मुदं लभन्ते। सखे एतत्समग्रमपि होलाक्रियाविशेषमधुना ग्रामस्य नगरीकरणात् प्रक्षीयमानमवलोक्यते। होला हि नाम वैरभावविनाशनसमर्थो महोत्सवः। किन्तु दुर्जनैस्तु मद्यं निपीय विजयां च भुक्त्वा विस्मृतमर्यादाः समुलंघितसमुदाचारमार्गा अपशब्द—प्रवीणा अनुपयुक्तवचनशीलाः सुजनैरुपेक्ष्यमाणाः कुजनैः साधूक्तिभिः प्रोत्साह्यमानाः

निजपरिवारसदस्यै—र्गालिपदेन सम्बोध्यमानाः ज्येष्ठैर्हस्तेन ताड्यमाना गृहं प्रति नीयमानाश्च नारीजनैर्गवाक्षजाल—मार्गेणोपहस्यमानाः कुक्कुरैरपि भोभोशब्दसमूहैर्निन्द्यमाना वीथिषु वीथिषु मदमत्तकरीवग्रामाटवीमाहिण्डमाना बालकैर्होहोलेलेशब्दैः पुरस्क्रियमाणाः कदाचिदुत्कटमद्यविक्षिप्ता नग्नशरीरा नतोन्नतमार्गपरिचिता अपि विजयाप्रभावप्रभाविता ग्राम्यनालिकापतनोन्मुखा कदाचिन्निपतिता अपि बीभत्सविग्रहा अस्मिन् जन्मन्येव नरकसुखमनुभवन्तः क्वचिच्छयित्वा होलां नयन्तीति कथन्नात्र विस्मयः!।

तथैव अहो परमपावनदीपोत्सवमहोत्सवः, एष हि नाम संसाराज्ञानतमोविनाशनतत्परो ज्ञानदीपप्रकाशपुञ्जप्रतीकः। अयमसीमानन्दकरः। श्रूयताम्—

चन्द्रप्रभोपमनवं घृततैलपूर्णं
प्रज्ज्वाल्य दीपकमहो च तमो विनाश्य।
विस्फोटनं स्वजयकारिरवं प्रसार्य
दीपोत्सवः प्रतिगृहं मुदमातनोति।।२९

अवसरेऽस्मिन् ग्रामीणा नागराश्च जनाः प्रफुल्लितवदना यथाशक्ति हट्टात्सामग्रीमानीय नवलपरिधानाविष्कृताभिनवविशिष्टांचिताः शुद्धमनसः सन्तः सायन्तने रात्रौ च महालक्ष्मीपूजन—सुस्वागतार्थं घृततैलदीपान् प्रज्वाल्य प्रतिगृहकोणं प्रकाशयन्ति यत्र निशापि दिवेवाभाति सखे!। बालकास्तु लघुलघुपटाखां विस्फोटयन्ति, सर्वत्रानन्दो विचरतीव प्रकाशरूपः। काचित्पटाखा तु आग्नेयास्त्रमिव ज्वालासम्भारं वमन्ती व्योम्नि त्वरितगत्या सर्वान् विस्माययन्ती सर्पनाम्नी भाययन्ती जनं पर्वतखण्डावस्फोटनमिवोच्चण्डविस्फोटं कुरुते। अन्या काचित्तु पटाखा पृथ्वीस्थापिताग्निना ज्वालिता वह्निस्फुलिङ्गानि विकिरन्ती ऊर्ध्वमुत्पतन्ती ज्वालामुखीव बालान् भयभीतान् वृद्धान् चकितान् यूनः प्रफुल्लितान् कुर्वतीवानारतमनलं वर्षति। अत्र हि शिशवो मातृक्रोडे मुखं प्रवेश्य निलीय काक्ष्येण पश्यन्तः कम्पमानदेहाः, महिलाश्च स्वशाटीपटान्तपिहिताननदेशाः, अपगतवयसो यष्टिग्राहिणस्ततो यावच्छक्यं बहुदूरं पलायितुकामाः, अभिभावका विस्फोटनकारिणं युवानं तर्जयन्तो मधुरगालिं च ब्रुवाणास्तं रुन्धानाः किञ्चिदन्तराले स्थित्वा सविस्मयमानन्दमनुगृह्णन्ति। बहवस्तु नारीपुरुषाः स्वभवनमारूढाः पश्य पश्येति भाषमाणाः दर्शयन्त्यन्यान् स्वस्कन्धाधिरूढान् बालांश्चेति।एतद्विस्फोटकनिर्गत—धूमप्रचयो धूमासुर इव रूपेण उड्डीयमानपर्वतइवाकारेण वर्धमानो विमलानिलं दूषयन् विषमिव विदधद् समग्रमपि वातावरणं श्वसनरोगानुत्पादयति। बर्बरितविस्फोटक—ध्वनिभिर्व्योममण्डलमाच्छादयतीव, येनानुमीयते यत्पार्थिवा जना देवलोकमभिजेतुं

सशस्त्रास्त्रा देवान् भाययन्ति। दिविषद्भिश्चेदं तूर्ष्णीं स्वर्मण्डलत एव मानवकृतानि प्रेक्ष्य हस्यते। सखे! नगरे धनिभिः सोत्साहमायोज्यमाना दीपावली क्वचित् तैलदीपेन क्वचिद् विद्युद्दीपेन मोमवर्तिकाभिश्च वसुधातलमपारगगनमिव बहुसुन्दरं विभाति। दीपप्रकाशपुञ्जनिर्जिततारागणोऽधर्ममार्गाश्रितलज्जित—पटाच्छन्नाननजन इव तमोऽवगुण्—ठनो न केनचिदपि साक्षात्क्रियते। दीपकभाभिरवलोक्यमानो झटित्येवान्त—र्धानतां प्रयाति। गगनमपि भवति भीतमिदं दृष्ट्वा, चिन्तयति चाहो! क्षिपाम्यहमुल्कापिण्डं पृथिव्याम्, परन्तु निशायामस्यां क्ष्मातलान्मां प्रति मानवैरेव प्रतीकाररूपतया यावच्छक्यं युध्यमानाः सन्ति।

वयस्य! सर्वमपि आकाशमपरं युद्धस्थलमिव दृश्यते। अहो! दुर्दशैव पशु पक्षिणामस्यां दीपावल्याम् एतद्विस्फोटकदीर्घभयानकरवश्रवणसंजातविस्फारितनयनेषु कश्चिद् दृढरज्जुबन्धं त्रोटयित्वोर्ध्वपुच्छः सन् स्वस्वामिना विरम विरमेतिमधुरध्वनि नाकार्यमाणोमध्ये दुष्टजनविस्फोटक—रवव्याकुलो येन केनापि मार्गेण विवृतमुखः परिधावन्नग्रतोऽन्यजनावरुद्धमार्गः कदाचिदेव हस्ते आयाति, अन्यथा ग्रामान्तं ग्रामान्तरमपि प्रापयति स्वस्वामिनमिति!

अहो! दीपपर्वजनितविस्फोटकमहारवसंजातविस्फारितनयना वानरशिशवोऽष्टनवमासदेशीयाः किमिदं किमिदमिति स्वभाषया पादपशाखाश्रितां पत्रातन्तरितां व्यग्रनेत्रां मातरं प्रश्नयन्तो जननीक्रोडश्लिष्टा कम्पमानशरीरा अस्मिन्नेव लोके जीवनं यापनीयमस्माभिरिति विचिन्त्य विभावरीममिलिताक्षा दुःखमयीं यापयन्ति।

अहह! स्वशिशुसहितनीडस्थायिविहगानान्तु दयनीया दशेति मन्तुं शक्यते। एषां कृते रात्रिरियमपरविश्वयुद्धमिव प्रवर्तमानं सर्वतो भाययति। दौर्भाग्याद् विस्मृतव्योममार्गा रात्रिचरखगाः प्राणपणेनोत्पतन्त आत्मजीवनमभियाचमाना सशस्त्रास्त्रशत्रुसंघधृत इवेतस्ततो मृत्युमुखपतितास्सन् रात्रिं नयन्ति। अस्यां दीपावल्यां तृणकाष्ठादिनिर्मितावासा निर्धना मानधना लब्धहस्तलगुडा आवासोपरिपतितविस्फोटकानि अपसारयन्तो यापयन्तीव निशामिति।

दीपोत्सवे मया बहुत्र मधुमयः स्नेहः, सद्भावमयी श्रद्धा अनुकरणीया परम्परा च साक्षात्कृताः, यत्र दीपोत्सवामोदामोदितो जनसमुदायो यथाशक्ति मिष्टान्नमर्पयति परस्परं मोमवर्तिकया सह। स्वजनमित्रबन्धुगृहगमनोत्सुकाः स्मयमाना बालका युवानो वृद्धा वा दीपोत्सवशुभकामना—वचनतत्पराः सहृदयाः प्रतिगृहं यान्ति, किञ्चित् स्थित्वा प्रेमपूर्वकं द्वित्राणि वचनानि कथयित्वा ततोऽग्रे प्रसर्पन्ति। दूरस्थास्तु ध्वनियन्त्रसन्देशेन

दूरवाण्या वा हार्दिक्यः शुभकामना निजेभ्यः प्रदाय मुदिता भवन्तीति रोचते मे सर्वम्। लिखितं काव्यमिदं श्रूयताम्—

श्रेयश्शुभं च निखिलं ननु नो नवीनं
नूनं च सौख्यमतुलं प्रददाति दिव्यम्।
दूरीकरोति सततं जगतोऽन्धकारं
दीपावली प्रकरुते परितः प्रकाशम्।।३०

आयान्ति ते निजगृहं विविधप्रदेशात्
अन्ये च केचन नरा बहुदूरतोऽपि।
प्रज्वाल्य दीपमभितो मुदिता भवन्ति
दीपावली प्रकुरुते परितः प्रकाशम्।।३१

योऽयं प्रवासमनुयाप्य च याति गेह—
मेतद्गृहं सकलसम्पद आपतन्ति।
माता प्रसीदति पिता भवति प्रसन्नो
दीपावली प्रकरुते परितः प्रकाशम्।।३२

संश्रूयतेऽत्र नगरे च बहुप्रदेशे
देशेऽपि यत्रमनुजाः प्रवसन्ति तत्र
विस्फोटकेन बहुधाा बहवो म्रियन्ते
दीपावली प्रकरुते परितोऽन्धकारम्।।३३

मैवं विधेयमधुनासुखकारि यत्स्यात्
प्रज्वाल्य दीपमिममेव मुदं लभन्ताम्।
यस्माद् भवेच्च जगतः प्रबलो विकासो
दीपावली प्रकुरुतां परितः प्रकाशम्।।३४

अहो! गोवर्धनपूजनोत्सवानन्दः। ज्ञायतां सखे!–

गौर्भारतस्य ऋषिभिः सुमता सुमाता
यद्दुग्धपानममृतं च घृतं विशिष्टम्।
संचालितं च वसुदेवसुतेन पर्व
गोवर्धनं क्व वसुधाभरणं प्रयाति।।३५

दीपोत्सवस्याऽपरस्मिन् दिवसे विवाहिता अविवाहिता युवत्यो भगिन्यो मातरो महिला गोमयेन चित्रविचित्राकृतीर्निर्माय सिन्दूराक्षतपुष्पादिभिर्विविधवर्णैश्च मनोहरणक्षमाश्चोपवासं पालयन्ति। तत्र कश्चिद् गोमयशरीरी प्रहरीव समग्रगोमय पिण्डरक्षायै स्त्रीभी रचितो बालानां चेतांसि विकासयतीव। गोवर्धनो हि नामोत्सवो गवां वृद्धिसूचको गोवंशरक्षणार्थं परिचालितश्च पारम्परिको महोत्सवः। किन्तु भौतिकसुख–साधनाभिलाषिजनस्यातृप्ततया कृषियन्त्रप्रभावविनष्टगोवंशस्य कुत्र वर्धनम्? अपितु सर्वत्रैव ह्रासो दृश्यते। नीचैस्तु गोमांसभक्षकैरनवरतमियं गौर्विलपतीवार्यजनान् पश्यति नेमां विलपन्तीं मातरं सर्वकारोऽपि त्रातुमुत्सहते। हन्त! दोग्ध्रीर्धेनुर्वोढानड्वानिति 'वैदिक मन्त्रोऽप्यवसीदतीवेमामवलोक्य कुदशमिति। कैश्चिद् वैज्ञानिकैस्तु भारतीयगोवंशस्य लोप एव विहितो वैदेशिकगोशुक्राणुस्थापनक्रियया। महान् चिन्ताविषयोऽयं सखे!। शुद्धगव्यमपि गोघृतं नात्रोपलब्धं भवति गोदधिदुग्धन्तु शून्यमिव ग्रामेष्वपि। दृश्यते न त्वया यत्पूजनोत्सवावसरे पुरोहितेन पण्डितेन वा याचिते गोमयं गोमूत्रं च बहुधा प्रयत्नेनावाप्येते। नगरेष्वपि तु दृश्यमानासु गोषु का भारतीया यस्या गव्यं समर्चायै योग्यमिति ज्ञातुं न शक्यते! अस्मन्मातरस्तु गोमयपिण्डेन गृहभित्तिमपि रेखाचिह्नेन रचयन्ति स्म पुरा गोमयस्य परमपावनमान्यतेतिश्रवणात्। हन्त! आधुनिका भारतीया वैदेशिका इव गोमयस्पर्शनमस्पृश्यमिति मन्यमानास्तस्माद् दूरमेव पलायन्ते। यद्यपि जानाति लोकोऽयं यद्' यथा धेनुसहस्त्रेषु वत्सो गच्छति मातरम्। किं चाशीर्वादप्रदानकाले पण्डितेनापि यजमानायगोवाजिहस्तिधनधान्यसमृद्धिरस्तु इति पठ्यते,' परन्तु महिषी पाल्यते लोकैः। तिसृषु महिषीष्वपि वर्तमानासु महिषीपुत्रो नैव परिचिनोति स्वमातरमिति नाश्चर्यप्रदमेतद् वृत्तम्? गौर्हि शिवस्य वाहनं महिषस्तु यमराजस्येति न जानीते कः? अनुमिनोम्यहं यन्महिषीदुग्धपानविचित्तो गोदुग्धपानलाभरहितो लोकोऽयं महिषासुरबुद्धि–स्सन् सर्वमप्यनर्थं कुरुते। दृष्टं श्रुतं वा भवता क्वचिदपि केनचित् पठितं वापि कस्मिंश्चिच्छास्त्रे यन्महिषीदुग्धपानं बुद्धिवर्द्धकम्, नैव किन्तु हन्त! सकलोऽपि लोकः प्रायशो महिषी दुग्धपानतुष्टिहृष्टपुष्टः शत्रुजनेन इव स्वजनेन सह विवदमानो विपद्ग्रस्तो वा दिवानिशं यापयति।

अहो!ग्राम्यजनानां श्रीसत्यनारायणव्रतकथानुश्रवणं धर्ममार्गाभिमुखीकरणशीलम्।

तदिदम्—

धौतं कटौ च बृहतीं च शिखां ललाटे
शङ्खं करे सुतिलकं पृथु चन्दनस्य।
विप्रो विरच्य यजमानगृहेषु सत्य—
नारायणस्य शुकवच्च कथां विवक्ति।।३६

निखिलेष्वपि व्रतोपवासेषु सरलं ज्ञानदं त्यागदयादानसद्गुणविकासकं विशिष्टं स्वल्पसामग्रीसाधनं व्रतमेतदवश्यमेव विलक्षणम्। पूर्णिमायां शुभतिथौ शुभदिने वाभिमतकाले पुरोहितेन गीयमानां श्रीसत्यनारायणव्रतकथां गृहीताक्षतपुष्पद्रव्यहस्ताः बालबालिकानार्यो मात्रैकपण्डिताननिर्गच्छच्छब्द—समूहश्रवणसमाहितचित्ता रचितवेण्यो विविधपरिधानदिव्यमूर्तयोरुदत्क्रोडस्थबालास्यपाणयः कदाचित्तं बालं कदाचित्तां महनीयां श्रद्धेयां कथां कदाचिन्निपतितशाटिकाञ्चलसज्जनव्यस्ताः ध्यानमग्नाः काश्चन कथाभिप्रायविस्मिताः आकथाकालमुपासीना तापसी इव शोभन्ते। पठति लोकभाषायामवगम्यतेऽक्षरार्थः कथार्थो वान्यथा देववाण्यमुक्ते तु टंटंमितिशब्दराशय एव श्रुतिपथमायान्ति अनधिगतार्थाभिप्रायकथाश्रवणातुराणामिति। समधिगतसंस्कृतज्ञानानान्तु गीर्वाणवाण्यामेव वाचनं श्रवणं च वरमिति मन्यामहे। अहो ग्राम्यपण्डितानां पूजनावसरे द्रव्यदृष्टिर्दर्शनीयैव। कथारम्भकाल एव चतुरो विप्रो जलाक्षतपुष्पाणीतिस्थाने जलाक्षतपुष्पद्रव्याणीति ब्रूते। यदि यजमानः सपादैकरूप्यकं हस्ते गृह्णाति संकल्पार्थं तद्दृष्ट्वा पुरोहितो विप्रो वा कथावाचकः पण्डितो विद्युत्स्पर्शाघातमिवानुभवति। गणेशपूजने विभिन्नस्थानेषु कृपणयजमानस्य हस्तौ प्रसरत एव न, पण्डितोऽपि कृतप्रतिज्ञो न स्वभावाच्च्यवते, असौ कुपितस्सन् आनीतमपि शङ्खं गृहे विस्मृतमिति वदति, कदाचिद् दृष्टे शङ्खे केनचित् पृष्टः 'त्वं न जानासि, नायं ध्वनिं कुरुत इति कथयति। समर्पिते यथेच्छं वित्ते तु सानन्दं बहुकालपर्यन्तं वादयति, पूजनान्ते स्तुतिपाठमारार्तिक्यकालिकं द्रव्यपरिमितं कुरुते, यावत्पात्रे निपतति वित्तं तावद् गायति विप्रो गीतम्। प्रणमति यजमाने त्वरितं निगदति रिक्तपाणिना न प्रणामो विधातव्यः। दृष्टद्रव्यकरो यजमानस्तु हर्षोत्फुल्ललोचनविप्रेण वैदिकलौकिकमन्त्रैरभिषीच्यत इव। अन्यथा प्रसीदेति प्रोच्य ततः सर्पति यथा तन्मुख एव सर्वं सन्निहितमस्ति। ततः कृतभोजनो दक्षिणां स्वीकृत्य गृहम्प्रति गच्छन् दक्षिणाधिक्ये प्रशंसन् यजमानं विकसितारविन्दाननोऽन्येनाकारितोऽपि आगच्छामीति ब्रूवन् रज्जुमुक्तोऽज इव प्रयाति,

दक्षिणानौन्ये तु प्रकुपितो निन्दन् यजमानकुलं शृङ्खलाबद्धचरण इव तीव्रातपपरिम्लानकमलमुखोऽनाकारितोऽपि केनचित् क्वचिदुपविश्य बहून् श्रावयन् हृदुद्गारं वमतीव। हन्त! पण्डितोऽर्चनीयो लोकैर्यथाशक्तिभक्ति समुचिता पारिश्रमिकरूपा दक्षिणा च देया। यद्यपि मानवजीवनोपयोगिशिक्षाप्रदाननिरतमेतदीश्वरभक्तिविवर्धकमास्तिकतोपादानकं तथापि हन्त! लोकोऽयं न तद्वदाचरतीति महान् विस्मयः।

ईशोऽस्माकं कारणं तस्मात्कथन्नासावस्मद्रूपो मन्यताम्? अतः सगुणोपासनैव वरं शिष्टं चेति मन्येऽहं कार्यकारणयोरभेददर्शनात्। वदन्ति प्रकृतिवादिनः सांख्याः प्रकृतेरेव कारणता तथापि सामान्यज्ञानमेतत् न महिला कापि सुतं सूते पुरुषमुपेक्ष्य। सत्यमपि जननभूमिस्तु न प्रकृतिरेव कस्मान्मन्यतान्तैः सांख्यैरिति। परन्त्वीश्वरकारणता नैवानेन विभिद्यते। जल्पन्ति केचिदात्मानं पण्डितम्मन्यमानाः प्राज्ञाः ईश्वरस्य रूपैकं निर्गुणत्वमिति। नाहमिदमभिनन्दामि, तान् पृच्छामि यदि कार्यकारणयोरभेदः ततः कथमीश्वरो निर्गुणः कार्यरूपसृष्टेः सगुणत्वदर्शनाच्चक्षुष्मतामेषाम्। विशाललोचनानामपि विलोचनानामेतेषां कथनमिदं खपुष्पवदनुमीयते। सांख्यमपि मातापितृजदेहं शाट्कौषिकमङ्गीकरोति नात्र विचित्रं किमपि। सांख्यस्य प्रकृतिकारणताप्रवचनपृष्ठभूमौ दार्शनिकस्य दृष्टिरियं कदाचित् सम्भाव्यते यत् सन्ततिकार्योत्पतौ महती कारणता मातृजनस्य; पितृजनस्य तु कृषकवदाचरणं प्रशस्यता भूमेरेव नहि अनुर्वरोसरभूमावुप्तं बीजं प्ररोहमारोहति। तस्मात्स्त्रीपक्षदर्शिनः सुजनस्य मम मतिरियम्। नैयायिकस्तु पितृजनकारणतैव सम्मान्यते। तदपि वरमेव। बहवः अनभूतजगत्कर्तृस्वभावगुणधर्माणस्तु विधवेव सधवा विलोक्यासूयन्ति, ताभ्यश्चाधिक्षिपन्तीव। अहन्तु सत्यं शिवं सुन्दरमीशरूपमभिपश्यन् परिसरेऽस्मिन्नटामि। सगुणशिवलिङ्गोपरि मुषिकमेकं भ्रमन्तं दृष्ट्वा सर्पकृकलाशवृश्चिकादिसर्वजीवाश्रयशिवस्य सगुणत्वं विखण्ड्य येन केनचिद् बोधो लब्धो निर्गुणत्वमपि साधितं प्रचारितं, नात्र विस्मयः कार्यः सखे!। किञ्च निर्गुणत्वप्रचारणेन सर्वत्राराजकता प्रसरेत्। निर्गुणत्वन्तूर्ध्वस्रोतसां विषयो नास्माकं गृहस्थानामिति कथं गृहस्थजनायोपदिश्येत? अतः सगुणत्वमेवानुपालनीयं हृदि। निर्गुणावलम्बिना केनचिन्मन्दिरस्थशिवलिङ्गोपरि पंकप्रक्षालनं कर्तुं शक्यते। यस्य निर्गुणज्ञाने सगुणस्य कारणता हन्त भो! कथं तेन सगुणनिन्दनमिति चित्रमेव वृत्तम्।

प्रश्नः—

पूज्यन्ते मूर्तयोऽजीवाः मृद्रत्नशैलनिर्मिताः।

सश्रद्धं मानवैः कैश्चिन्निन्द्यन्ते मूर्तिपूजकाः।।३७

किं सत्यं किमसत्यं भो इति ज्ञापय तत्त्वत:।
निराकारं कथं ब्रह्म साकारं क्रियतेऽधुना।।३८

उत्तरम्—

ईशा वास्यमिदं सर्वं भाषमाणोऽपि यो जन:।
कुरुते निन्दनं मूर्ते: स मूढो न मतस्त्वया।।३९
यदि सर्वत्र वर्तेत ईशो नित्य: सनातन:।
मूर्तौ किं नैव दृश्येत किं मूर्तिर्जगत: पृथक्।।३९

किमेरण्डस्य बीजात्तु जायते वटपादप:।
कार्यकारणसिद्धान्तात् साकारं मन्यतां न तत्। ४०

यो हि जातो महाज्ञानी मूर्तिदर्शनतो जन:।
तेनैव क्रियते नित्यं किमर्थं मूर्तिखण्डनम्।।४१

अहो ! सूर्यषष्ठीव्रतवैशिष्ट्यम्।

तदिदमाकर्णय सखे—

कुर्वन्त्यहो द्विदिवसीयमिहोपवासं
धृत्वा कटे च शयनं मुदिता गृहिण्य:।
नानाभिलाषपरिपूर्तिविधायकं तत्
सूर्यव्रतं हृदयहारि विहारराज्ये।।४२

देशोऽस्माकं कृषिप्रधान:। अत: समुत्पन्नशस्यफलमादौ यस्मै कस्मैचिद् देवायार्पयित्वैवास्वाद्यतेऽस्माभि:। कार्तिक्यां सर्वदु:खसहिष्णुशीलनारीणां प्रतीकभूतमिदं सूर्यषष्ठीव्रतमनुष्ठानं मनोभिलषितार्थप्रदायकं स्वीक्रियते श्रद्धालुभिरुत्तरभारत–वासिभिरस्माभि:। दिनद्वयस्योपवासं कुर्वतीष्वास्वस्मन्मातृषु काचिद् वित्तैषणावती, काचित् पुत्रैषणामात्रचित्ता, अपरा धनधान्यसम्पन्ना सर्वदानन्दावाप्तये स्वपतिसुत–पारिवारिकजनस्वास्थ्यनैरुज्याकांक्षिणी, काचिदन्या सद्य:प्राप्तपरमानन्दजनित–प्रफुल्लितास्या सवाद्ययन्त्रं मृत्तिकाप्रस्तरमयीं वाकृतिं दैवीं बहुरूपां या हि व्रतप्रतीकभूतां तामेव पवित्रभावेन रचितांजलिपुटा, काचित् पीतवस्त्रा स्वर्णिमविग्रहेव, काचिन्नीलाम्बरा

नीलगगनदेहेव, अन्या रक्तशाटिका पाटलशरीरेव सर्ववर्णमयं तत्स्थानमुपवनमिव प्रकाशयन्त्यः प्रज्वालितदीपाभिमुखा मिष्टान्नपात्रपुरोभागा सरसमधुरेक्षुदण्डनिहितकरा जयजयशब्दाः काचित्तु बहुवत्सरपूर्वपलायितस्वस्वामिमुख दर्शनोत्सुका प्रतिवर्षमिवा–शाबन्धं हृदि दधाना समस्तविश्वावलोकयितारं प्रतिकणप्रकाशयितारं भगवन्तं मरीचिमालिनं निजपतिजनावेक्षणाय समर्थदूतमिवसमर्चयन्ती वीक्षतेऽमिलिताक्षिणीति। दृष्टं बहुभिर्यत् सकलब्रह्माण्डावेक्षको भास्वान् अन्विष्याभिमतं तपस्विस्त्रीणां घटयत्येव। पर्वण्यस्मिन् धनार्जनहेतुप्रस्थितदेशदेशान्तरा यथासम्भवं दूरदूरादप्यागत्य सोत्साहं प्राप्तावकाशा गङ्गातटं तडागघट्टं सेवमाना अर्द्धांगनिमग्नशीतलजलाश्च काश्चन प्राचीदिगभिमुखा दिनकरोदयप्रतीक्षालग्नाः समुदितमवलोक्य समर्च्य चात्मानो व्रतपारणायोग्या मन्वते। सर्वतः समुल्लासः प्रकाश इव प्रसरन्नसीमानन्दमातनुते सखे!।

अहो! विस्मरन्नहमासं नवरात्रपर्वप्रभावरहस्यवैचित्र्याभिकथनम्। एकदा नवरात्रपर्वणि मदीयो पुत्रो मातृदुर्गाचित्रमवलोक्य मामपृच्छदिति। तच्छ्रूयताम्–

देव्या विलोक्यमवद्भिभवो विलोक्य
चित्रं पितः मृगपताविह राजते का।
घण्टात्रिशूलशरचापसुशङ्खपाणि–
रेनं विशालदनुजं कुपिता लुनन्ती।।४३

दुर्गास्ति सर्वजननी सुत पूज्यपूज्या
या दैत्यघातनकृते लभते जनिं स्वाम्।
श्रुत्वावदत्पुनरसौ झटिति स्मितो मां
दैत्यं पितस्त्वमधुनानय हट्टदेशात्। ४४

जातस्मयेन सहसा स मयानुपृष्टो
दैत्यं कथं विभव वांछसि नैव देवीम्।
द्रक्ष्यामि तां दनुहतिं च विधातुमेता–
मित्युत्तरं सपदि तस्य मुदं तनोति।।४५

नवरात्रपर्व नाम हि विशृंखलपुरुषप्रधानसमाजविकासाय कर्तव्यप्रच्युताभिमानि–जनमानविमर्दनपुरस्सरमखिलशक्तिसमुदयकोषानार्याः पराक्रमसूचकम्। चिन्त्यतां वस्तुतो महिता महिला एव सृष्टेरक्षुण्णताकारणम्, पुरुषस्तु मदान्धकरीव, यस्मिन् नारीजनापेक्षया सहिष्णुतादानदयादिमानवीयसद्गुणा नैव विकसिता दृश्यन्ते। आबाल्यकालं नारी सेवमाना वन्दिनीव, दन्तमध्यस्थजिह्वेव संकोचनशीला भवन्ति। पुरुषः सर्वदामानाकांक्षी न नारीजनं सम्मानयति, स्वयमवगुण्ठविरहो सर्वमवलोकयन् ' मैनामन्योऽद्राक्षीरिति' वचनशीलो महिलाभ्योऽवगुण्ठनमनिवार्यं ब्रवीति। दार्शनिकैरपि ' असूर्यम्पश्या' इति प्रोच्य नारीणान्तु कारागारगतत्वमेव साधितम्। दृष्टिसम्पन्नानां दर्शनतत्त्वविदामदर्शनमवश्यमेव चिन्तनीयम्।

अहो परिश्रमशीलानां जननीनां वर्णनायोग्यानि गृहकृत्यानि। निजपरिवारभोज्यान्नग्रहणार्थं पुष्टकाष्ठमुसलेनौखलीनिहितधान्यकुट्टनं सखे! नूनमेव नारीशक्तिसाहसश्रमपरिचायकम्। कुट्टनं हि नाम तुषविमोकीकरणम्। नैकवारमुसलप्रहारजन्यं तुषपार्थक्यम्, सहस्राधिकप्रहार–प्राप्ततण्डुलकणामुक्ताकणादपि महार्घाः श्रेष्ठा ग्राह्याश्च, यन्निर्मितौदनं पिच्छिलदधियुतं चणकसर्षपशाकेन साकं भुंजानो ग्रामीणो जनो सुखमादधाति तृप्तिं चाधिगच्छति। सत्यं प्रोक्तं केनचिदिदम्–

तरुणं सर्षपशाकं नवौदनं पिच्छिलानि च दधीनि।

अल्पव्ययेन सुन्दरि! ग्राम्यजनोमिष्टमश्नाति।।४६

इत्थं गोधूमपेषणमपि नाल्पश्रमसाध्यं ग्राम्यनारीणाम्। चक्रद्वयमध्यनिपतद्गोधूम–चूर्णीकरणलग्ना नार्यो नावसीदन्ति; तास्तु स्वकर्मेत्यवबोध्य तत्कर्मलीना ग्राम्यगीतानि गायन्ति, यत्र चक्रमेव वाद्ययन्त्रभूमिकां पूरयतीव। हन्त! इतोऽपि ग्राम्यमहिलानां चुल्लिकाफुक्कनमतिदुष्करमनुमिनोमि। तण्डुलद्विदलशाकोपस्करपात्रा काष्ठेन गोमयशुष्कपिण्डचुल्लिद्वारं दीपशलाकया ज्वालयति, कदाचिदार्द्रेन्धनप्रज्वालनदुःखिता मृत्तिकातैलबिन्दून् प्रक्षिप्य पुनः पुनस्तथाकरोति, मृत्तिकातैलप्रसारप्रभावितेन्धनं ज्वालयित्वा शीतकाले वह्निरपि विनष्टधैर्यवीरो विरमति, उद्भवति ततो धूमसंचयस्तं हस्तेन व्यजनेन वा दूरमपसारयन्ती मुखवायुफुक्कनं कुरुते। अत्रान्तरे कदाचित् शीतकुपितभीतोऽग्निरुज्ज्वलन्नेव निर्वापतां याति। अनेकवारफुक्कन क्रियानिरतनेत्रद्वयागतवाष्पा कुलितेक्षणा वारं वारं करेण प्रोंच्छयन्ती हुताशनं पराजित्य विजयं लभमाना , गुरुजनाकार्यमाणा अन्यान्यपि गौणकार्याणि साधयन्ती, रुदति शिशौ तुष्णीं शान्तं कृत्वा कदाचित्क्रोडीकृत्य दुग्धं पाययन्ती भोज्यं पचति, सत्यमाह वैयाकरणवृत्तिकारः कारकप्रसङ्गे 'रुदति रुदतो वा

शिशौ प्राव्रजीत्'। एवं निर्मितस्वादुभोजना सा सम्पादितबाह्यगृहकार्यान् गुरून् पतिं पुत्रं च यथाभीप्सितपरिवेषिताशना संस्थापितपीठिका मध्ये मध्ये भोज्यपदार्थान् ददती व्यजनं परिचालयति च सर्वान् सानन्दं भोजयति। ततोऽपसारितजुष्टशिष्टभोज्यभाण्डा स्वाशनजातमदन्ति इदं सर्वमपि भारतीयनारीणामदम्योत्साहसाहसत्यागौदार्याभिसूचकम्। सत्यमाह कविर्निरंजनो मिश्रः—

पत्युः पदाब्जनिलये मकरन्दशय्यां कृत्वा स्वजीवनरसं सततं पिबन्त्यः।
प्रत्यक्षदेवमिव वृद्धजनं भजन्त्यो यत्राधुनापि गृहकर्मरता गृहिण्यः।।४७

काश्चित्तु प्रोषितभर्तृका गुरुजनभीता सती स्वपत्युरागमनं काकमुखेनाच्चारयति। श्रूयताम्—

काकं भोजयते च काकलवधूं निन्दत्यहो रोषतः
सद्यो ब्रूहि कदागमिष्यति पतिर्मुग्धा ब्रुवाणा सखी।
मन्दं मन्मथपीडिता विधुमुखी स्वप्ने वसन्तागमे
गेहे प्रोषितभर्तृका गुरुजनाद् भीता गवाक्षाश्रिता।।४८

नगरे त्वेतद्विपरीतमाचरन्ति शिक्षिता महिला अगणिताः, तदग्रिमे निश्श्वासे यथावसरं प्रवक्ष्यामि। मध्याह्ने स्वस्य स्वपरिवारसदस्यस्य वा शिशुं सर्षपतैलेन मर्दयन्ति। किञ्चिद्विश्रम्य पात्राणि प्रमार्ज्य वस्त्राणि प्रक्षाल्य गृहं स्वच्छं विधाय धान्यगोधूमराशिं सूर्यातपे प्रसार्य यथोचितान्तरालं परिचाल्य पूर्वसायं गोण्यां पूरयित्वा रात्रिकालीनभोजनोपकरणानि प्रेक्षन्ते। गृहयुवत्योऽपि पाकप्रवीणा मातृसहायिकाः कदाचिन्मात्रादेशवशवर्तिन्यो गृहोपकरणमप्राप्य मातरं पृच्छन्ति। सत्यमाहमम्मटः

मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तद्भण किं करणीयमेवमेवन वासरः स्थायी।।४९

हन्त सखे! अत्र कश्चित् पित्तोपहितचित्तो यथा सर्वं लोकं पीतमेव तथैव स्वैरविहारार्थिनीत्वमवलोकते।

हन्त! नार्यो नाद्रियन्ते, सन्ततिजननपालनपोषणपरिवर्धनार्पितजीवना मातृजना स्तथाप्यभिमानिजनैस्तिरस्क्रियमाणा अपशब्दसम्बोध्या बहुभिस्तु ताड्यमाना लोकेषु दृष्टा। अहो! निष्ठुरस्वभावमानव! नैतदुचितं ते कुकृत्यम्। स्मर मनुभणितिं' यत्र नार्यस्तु पूज्यन्ते

रमन्ते तत्र देवता:।' अनेकेऽलसशिरोमणयो धूमवर्तिकां पिबन्तो नारीजनैनैव गृहकृषिगो–वाणिज्यकार्याणि कारयन्ति। मन्येऽहं नवरात्रोत्सवो नारीणां पारतन्त्र्यशृंखलाविभेदपूर्वकं स्वातन्त्र्याभिव्यञ्जकं पर्व। अतो नारीभिर्न भेत्तव्यं स्वाधिकार सम्मानाभिरक्षणे। जागर्ति साम्प्रतं नारीसमाज इति प्रमोदकरं वृत्तं विभाव्य चित्तकमलं विकसतीव। नैव नवरात्रपर्वौचित्यं नारीभिर्विस्मर्तव्यम्। परन्तु नवरात्रपर्व नवरात्रोत्सवमिति विकल्प्य पुरुष प्रधानसमाज: स्वस्वामित्वं रक्षति। यद्यपि आपणे, हट्टे, चतुष्पथे ग्रामेष्वपि भगवतीदुर्गादेव्या दुष्टराक्षसविनाशतत्परा: प्रतिमा: संस्थाप्य लोकाय सन्देशो दीयते, तथापि मधुरस्निग्धभीरुस्वभावा नार्योऽविचिन्तित नवरात्रप्रभावरहस्यसन्देशा निराहारा: स्वल्पाहाराश्च कृशकाया भवन्त्यो नवरात्रं व्यर्थमेव यापयन्ति। हन्त! चिन्त्यमेतदवश्यम्।

अये सखे विचित्रास्मदीया श्लाघनीया संस्कृति:, यत्र पूज्यते प्रकृते: प्रतिकणमपि। पादपा:, जीवा, पशवश्चेतीति को न जानाति। विदिता हि नागपंचमीयस्मिनुत्सवे विषधरा नागा समर्च्यन्ते दुग्धपानेन श्रद्धया ग्रामेषु। दिनेऽस्मिन् गृहिण्यो गेहभित्तिषु गोमयेन नागाकृतिमालेख्य पूजनं विदधति। तद्यत्–

पर्वोत्सवेषु मुदितानुदिनं प्रभाता–
दारभ्यगेहकृतकं परिपूरयन्ती।
भित्तिं प्रमार्ज्य च विलिम्प्य गृहं समन्ता–
दालेख्य चित्रमतुलं बहु सज्जयन्ती।।५०
नागोत्सवेषु रुचिरं ननु गोमयेन
नागाकृतिं विरचयन्ति हृदा प्रसन्ना।
भित्तावपि प्रमुदिता लघुदुग्धपानं
संस्थाप्य यत्र बहुसर्पसमर्चनाय।।५१

धन्यमस्माकं चिन्तनं पूर्वजानाम्। यद्यपि न जाने किमर्थं नागा: पूज्यन्त इति रहस्यविषयस्तथापि वयं सर्वं पूजयामो यद्धि सृष्टिजातमिति। दिनेऽस्मिंस्तु सर्पोपजीविनो ग्रामेषु पेटिकानिगृहीतं सर्पं दर्शयन्ति, अन्नं धनं वा लभन्ते। नूनमिदं प्रमोदकरं बन्धो:!

अहो! रक्षाबन्धनव्रतोल्लासोऽस्मद्भारतीयानाम्।
सौभाग्यं सुजनस्य तस्य भवतो यस्य स्वसा रागतो
बध्नातीह पवित्रसूत्रमधुना भ्रातु: करे भाग्यत:।

रक्षासूत्रसुशोभितं करमहो दृष्ट्वा प्रसन्नस्सखे
प्रत्यब्दं बहु चिन्तयामि किमयं शून्यो मदीयः करः।।५२

रक्षाबन्धनं हि नाम भगिनीजनस्याजीवनमभिरक्षणाय प्रतिज्ञावधारणम्। दिव्यैषा परम्परा विस्मयावहा कथं न? यत्रैकस्मिन् गृहे समुत्पन्नसहोदरभ्रातृस्वसृमध्ये भेदः। स्वसा तु प्ररूढयौवना पितरभिभावकजनचितं बन्धुवर्गानुमोदितं वरं पाणिग्रहविधिना वृणुते। समग्रमपि जीवनं तद्वरानुगमने छायेव समर्पितप्राणाशरीरसर्वस्वा सततं यापयत्यतिवाहयति वा। यत्रैतस्य जनिरभूत् शिक्षा च पूर्णा जाता, यद् गृहं विवाहात्प्राक् तस्या एवासीत् तत्तु करपीडनान्ते परजनगृहमिव प्रतीयते। महाकवयस्तु 'अर्थो हि कन्या परकीय एवेति' मन्यन्ते, यां पतिसन्निधौ सम्प्रेष्य अभिभावकाः प्रत्यर्पितन्यासा इवानन्दमवाप्नुवन्ति। ब्रूते कश्चिद् यत्कन्यका दूरदेशे विवाह्याः। मन्यतामतिकठिनेयमवस्था, पतिकुलं प्राप्य कन्या सा विक्रीतपशुरिव पाणिग्रहरज्जुबद्धा संस्मृत्य संस्मृत्य निजपितृगृहदिनानि अश्रूणि प्रमार्जयन्ती, पतिगृहकार्यसम्पादनव्यस्ता या स्वच्छन्दमानसा सैषा श्वश्रूननान्दृव्यंग्यबाणभयभीता व्याधशरसन्धानभयाक्रान्तहरिणीवात्मानं रक्षार्थं प्रयतते। समयानुसारं भर्तृपरिवारसंकुला परिवर्तनमादधाति। अत्रान्तरे पितरं भ्रातॄन् स्वजनान् वा स्मरति विस्मरति च। समायाते रक्षाबन्धने वात्सल्यमयीमातृप्रेषितवस्त्राभूषण मिष्टान्नादिप्रलोभनवस्तु—प्रलोभिता निजभ्रातरमवाप्य ग्रीष्मकालीनशुष्ककासाराश्रयो मीन इव वर्षर्तौ परिपूर्णसलिलकासार—जनितापरिमितानन्दसंरम्भा समुच्छलन्ती दध्यक्षतहरिद्रा—चूर्णमधुरान्नरक्षासूत्रपात्रहस्ता भ्रातृललाटे तिलकं कृत्वा मिष्टं भोजयित्वा रक्षासूत्रं निबध्नाति, कुशलमनामयं पृष्ट्वा स्वपितृकुलस्य तानि तानि दिनानि स्मरन्ती समुल्लासाब्धौ निमज्जतीव।

अहो! अत्यन्तं रोचते मे रक्षाबन्धनपर्वेति। किन्तु वयन्तु सहोदरभगिनीशून्या दिनेऽस्मिन् गङ्गादितीर्थसोपानमार्गाश्रितपरजनश्रद्धातिरस्कारप्रदत्तवस्तुजीवना भिक्षुका इव भगिनीपथमवलोकन—प्रस्तरायितनयना रक्षासूत्राबद्धसुशोभितपाणीन् दृष्ट्वात्मनो दौर्भाग्यं विज्ञायेश्वरमुपालभमाना यया कयाचिद् भगिन्या पुरोहितेन वा रक्षासूत्रनिबद्धहस्ताः सुखमनुभवामस्तुष्यामो रक्षार्थं प्रतिजानीमश्चेति। परन्तु हन्त! वर्तमानकाले केषांचिद् दारवशवर्तिनामौदासीन्यं भ्रातृणां रक्षाबन्धने। क्वचिदवलोक्यते काश्चन भगिन्योऽपि विकसितसम्पदो भ्रातृनेव रक्षासूत्रं बध्नन्ति, हीनविभवभ्रातरन्तु नीरसफलमिव त्यजन्ति, सङ्गमे कदाचिद् व्याजं नाटयन्त्यो गच्छन्तीति महान् चिन्ताविषयः।

अये सखे! ग्रीष्मे गर्जति ग्रामे, भगवान् भास्करस्तु स्वीयसमग्रशक्तिपुरस्सरं

प्रचण्डप्रतापज्वाला–वर्षणं कुर्वन् जनैर्नाभिनन्द्यते। सर्वोऽपि लोकः शीतनं जलमनिलं चाभिलषन् यत्र कुत्रापि मध्यन्दिनमतिवाहयतीव। अहह! किमर्थमयं ग्रीष्मः कल्पितो विधिना? ग्रीष्मे तु प्रायः अविरलतापसन्तप्तमानवाः कदाचिदेव उपरि विलोकयन्तो वदन्ति। यथा–

मन्ये तपति सूर्योऽद्य वह्निज्वालामनारतम्।
जहाति स्वगुणं तोयमनिलश्चानलायते।।५३
क्व सुप्तो वारिद ग्रीष्मे न गर्जसि न वर्षसि।
अहो कलियुगो घोरः सज्जनो दुर्जनायते।।५४
वर्ष वर्ष क्षणं मेघ सूर्यतप्तान्विनोदय।
अन्यथावारिदोऽसि त्वं धिक् ते नाम गृहं गुणम्।।५५

पशवो म्रियमाणा ग्रीष्मातपप्रभावविनष्टग्रासकवलाभावात् क्षीणशरीरा रुग्णा इव अनवरतश्मिसहस्रसंवर्षणेन शुष्ककासारानासाद्य वन्यजीवा पक्षिणो निन्दन्ति भगवन्तं भास्करमिति। मयानुभूतम्। शूष्यन्ति कूपाः जलशून्यास्तडागा विकसिताम्भोरुहविस्मिता विस्फारितनयना इव सरोवरा रुदन्ति निर्भर्त्स्यन्ति च मरीचिमालिनं मिहिरम्। धन्यं महीतलं यद्धि संचितसलिलमर्पयित्वा जगतः प्राणान् रक्षति जननीव।

ग्रीष्मर्तौ कृषिकार्यमात्रव्यवसायिनान्त्वनलस्फुलिङ्गवर्षणनिरतसूर्यप्रचण्डतापभय विश्रान्तशीतलानिले क्वचिदश्वत्थवृक्षच्छायांसघनवंशलतामण्डपं वाश्रित्य तालव्यजनहस्ता ग्रामीणाः सानन्दं कदाचित्प्रचुरस्वेदबिन्वार्द्रदेहा 'महानातप' इति कथयन्तः द्यूतताशक्रियामग्ना जलाशयमत्स्य–निग्रहाभिलाषिवकराज इव व्यतीताशनकालाः पत्नीपुत्रजनाकार्य माणा अन्येन केनचित्प्रेर्यमाणा मित्रेण न ततो निवर्तन्ते हन्त! सत्यमाह शूद्रकः–द्यूतं नामासिंहासनं राज्यम्।' अथ च गतेऽस्तं भास्वति गृहमागत्य पशुभ्यो घासं प्रदाय वस्तुक्रयार्थमापणं द्विचक्रिकया कच्छपगत्या ग्रामीणेन साकं राजनीतिगृहकृषिविषयिणीं वार्ता कुर्वन्तः स्वमतानि श्रावयन्तः सर्वकारसाफल्यवैफल्यविषये प्रलपन्तो हर्षखेदमानसाः विगतैकप्रहरनिशायां स्वगेहं प्रत्यागच्छन्ति। अत्रान्तरे केनचिदाहूते तमालपत्रचूर्णे मिश्रयित्वा सुधां सुधाप्रसादमिव प्रेम्णा तदणुकणं विधाय द्वित्रिभ्यो वितीर्य स्वल्पमपरेण याचिते नास्तीति प्रोच्य 'भ्रातो जातो विलम्बः' इत्यभिधाय द्विचक्रिकामग्रे कुर्वन्ति। गृहमागता गृहिणीतिरस्कारवचनसम्मानिताः केचन तद्वचनादत्तकर्णाः कदाचिन्मिलितोऽ–सावासीत् सम्बन्धी अस्माकं हट्ट इति कथयित्वा

जानामि ते सत्यभाषण–मिति गृहीतस्वपत्नीसदुत्तरा स्मयमाना तदन्यत्र पंजरमुक्तखग इव व्रजन्ति।

शीतकाले तु सखे! ग्रामे एवं दृश्यं दृष्टिपथमुपयाति–

ऊर्णावस्त्रसमावृत: कृशतनुर्भुक्त्वा दृढं भोजनं

कृत्वास्ये च तमालपत्रमतुलं जल्पन् स्वमित्रैस्सह।

वह्निं सेवत एव सर्वसुखदं त्यक्त्वा च कर्माण्यहो

शीते वारिभिया निमज्जनमसौ त्यक्त्वा भवन्पीवर:।।[१६]

ऊर्णावस्त्राच्छादितशरीरा ग्रामीणबन्धवो वह्निं सेवमाना: स्वाङ्गप्रोंच्छनीपुटे चणकमक्कातण्डुलभर्जनानि निधाय कटकटेति चर्वयन्तो दन्तैश्चूर्णीकृत्य भुंजते। इमे तु शीतजलाद् भीरू रणाङ्गण इव बिभ्यति। अतस्त्यक्तसलिलस्नाना अपरेण 'कदा स्नानं भविष्यति भो इत्युक्ते' व्यतीतविहिताभिषेकमासा: मकरसंक्रान्तावुष्णजलेन कदाचित्तीर्थजलेन वा चटखेव स्नात्वा सद्य एवोष्णकम्बलादिपटाभिलषिणो वेपथुमन्तो हुहुहुहुवदन्तो प्रज्जवलिताग्निमन्वेषयन्ति केचन। हन्त! महच्छीतभीतलोको यदा भवति शयानस्तदा द्वित्रा: पंचषा ग्राम्यचौरा गेहभित्तिमुत्पाट्य कवाटं गवाक्षं भित्वा सर्ववस्त्राभरणानि अपहरन्ति। समुदिते दिनकरे प्रात: वृत्तमिदमग्निरिव झटिति प्रविशति जनश्रुतमार्गं यतो विस्मिता: समायान्ति बहव: सुजना: कुजनाश्च। अत्र कश्चित् स्वजनोऽस्मीति दर्शयन् स्वौष्ठदत्तपाणिश्चक्षुषी विस्तारयन् भ्रात:! कथमिदमापन्नम्? कतिवादने कृतमिति? चौरै: किं किमपहृतम्? कश्चिदुत्तरयति, कश्चनागरोऽन्यथा वदति वा। अत्र चोरितमहार्घवस्तुस्मरण–दु:खशीला महिला हस्तद्वयताडनतत्परवक्षस्स्थला मुक्तकेशा: प्रततरुदिताश्रुबिन्दुधाराभिषिक्तवदना: ग्राम्यनारीभि: सान्त्वनावाक्यैस्तूष्णीं कार्यमाणा विचित्रा एवालक्ष्यन्ते, यामवलोक्य तत्र समुपस्थितजनसमूहो नयनाश्रूणि प्रमार्जयन्सान्त्वयति। अत्रैव कश्चिद् दुष्टस्तुष्टो हृदयेन वाचा खिन्नोऽस्मीति प्रकाशयन् अहह! इति ब्रूते, गृहसदस्यानां दोषांश्च प्रकटयति परिगणयति चेति। तद्गृहवृद्धि तप्तहृदयशत्रवस्तु तस्मिन् दिवसे चौर्यवृत्तान्तजनितोल्लासितास्या आत्मन: सुदिनमिव वदन्ति मन्यन्ते चेति को न जानाति।

अहो सखे! आकर्णय श्वसुरालयवर्णनं ग्राम्यानां नगरवासिनां वा। श्वसुरालयो हि नामापर: कारागारो मानिनाम्, स्वाभिमानधनानान्तु नरकवास इव, व्यपगतलज्जानान्तु सुरालय इवेति नात्र विस्मय: कार्य:। दिनद्वयस्यापि स्थितिर्यत्रैषां दु:खावहा, पीडावहा

सर्वसुखोपेता विज्ञायते। तत्र गतो जामाता प्रथमे दिने पूज्यते जलपानाशनशयन–सम्भाषणादिभि: द्वितीये तत्तत्सेवने ह्रास: कृष्णपक्षीयचन्दक्षय इव क्रियते, तृतीयेऽसेवमानो येन केन अभाषितपुमान्स लब्धभोजनस्तिरक्रियमाणो मनसा निवार्यते गृहसदस्यै:, चतुर्थे श्वसुरेण श्यालकेन वानुज्ञात: प्राप्तकार्यो हट्टं प्रतिगच्छन् परिवारसदस्यपदवीम–धिकरोतीव। पंचमे तु तर्ज्यतेऽसौ वराको येन केन, तत आदिश्यते भृत्यजन इव माननीयो जामाता महोदय:, ततोऽग्रे परित्यक्तलज्जो भूत्वा दिनान्यतिवाहयति। इदं श्रुत्वा ज्ञात्वा न मे रोचते श्वसुरालयो वयस्य!। हरिर्हिमालये शेते विष्णुश्शेते महोदधौ। कलौ किं नहि जामाता शेते श्वसुरभृत्यक:। श्वसुरालयपरिज्ञानाय नव्यवराकवरैस्तु हिन्दीकथाकारप्रेमचन्द्रस्य 'जमाईराजा' जामातृराजेति कथावश्यमेव पठनीया भारवे: कवेश्च जीवनीविषयिणीजनश्रुतिर्वालोचनीयेति मदीयो विमर्श:। न सर्व: श्वसुरालय एतादश:। अत: सखे!श्रूयताम्—महान् प्रभाव: श्वसुरालस्य दाम्पत्यजीवने तथाहि—

श्यालो यस्य शनिगुरुस्सुगृहिणी श्वश्रूश्च केतु: कलौ
अर्कश्च श्वसुर: कलत्रभगिनी ज्येष्ठा च राहुर्मता।
आवुत्तश्च बुध: सुधांशुसुमुखी श्याली च शुक्राह्वया
जीवन्मुक्तिमहो पतिस्स लभते रागादिशून्यो भवन्।।५७

श्वसुर: सेव्यते येन श्वश्रू: पूज्यते सदा।
स जनश्चुम्ब्यते पत्न्या कलिकाले समागते।।५८

एतद्विपरीतास्तु नाद्रियन्ते हन्त!। तेषान्तु दशैव भिन्नेति। तदपि श्रूयताम्।

पिता सम्पूज्यते येन सेव्यन्ते बन्धुबान्धवा:।
भर्तारं न हि तं रोषाद् भार्या सम्भाषते प्रियम्।।५९

सखे! ग्रामस्य रमणीयतापि दूष्यमाणाधुना वर्तते नगरकुप्रभावाद् ऋतुप्रभाव इवानायासम्। वदन्ति ग्रामेया वृद्धा यद् युवजनेषु शिष्टाचार: प्रक्षीय–माणोऽस्ति वर्षणाभावग्रस्तजलाशयसलिल–राशिरिव। अभिवादनं म्रियमाणं लोक्यते गतिस्थित्यासनकाले प्रायशोऽस्मान् दु:खयत्येव। पुरा हि वयं यदा युवका आस्म तदा ज्येष्ठानां समक्षमुपस्थानेऽपि सम्भाषणे च भवति भीति:; परन्तु साम्प्रतिकास्तु सदाचारविचारमार्गमुलंध्य कदाचारनदीनिमग्नाश्श्रेष्ठैर्निवार्यमाणा अपि धूम्रपानान्मद्य–

सेवनान्न विरमन्ति। हन्त! विषीदामीदमवलोक्य निहितशिरोदेशकरयुगलो निश्श्वस्य दीर्घं महानुभावो निगदति कश्चिदपरो ग्रामीण: किं किं जीवने दृष्टिपथमागमिष्यति? ईश्वर एवाभिजानाति नान्य: कश्चन। अन्यस्तु ग्रामेयो वदति चलदूरवाणीविषये यद् ग्रामेऽपि लघुलघुबालका आदिनं गानं किमपि कर्णे कृत्वा शृण्वन्ति पश्यन्ति चेति। एतन्मोबाईलयन्त्रप्रभाविता न पठन्ति नैव गृहसदस्यानां परार्शमनुवर्तन्ते। बहुशो बोधिते तु कुप्यन्ति गृहात् पलायन्ते, अनेके तु दुर्गुणशिरोमणिसम्पर्कात् ताडिते पितरि भ्रातरि वाभिभावकैर्विषं भुक्त्वा मरिष्यामीति वदन्तो म्रियन्ते। हन्त! ग्राम्यजीवनमपि साम्प्रतं न तथाविधं यथाविधमासीत् पुरा।

अनेन प्रकारेण विविधव्रतपर्वमहोत्सवसङ्कुलं ग्राम्यजीवनं सामान्यतया रसभरमेवेति मदनुभव:। अत्र सर्वोऽपि सर्वेषां जानाति सर्वं, नगरे तु केवलार्थाभिलाषवतां वासो, ये व्यस्तत्वात् प्रतिवेशिपरिचयमपि ज्ञातुं नाकाङ्क्षन्तीति महदाश्चर्यम्। सखे!ग्रामे हृदनुबन्धं कार्यं नगरे तुअर्थानुबन्धं कार्यम्। ग्राम्यजीवने सहृदयता नगरे तु सहृदयशून्यतैव, ग्रामीणा धर्ममार्गानुगामिनो नगरवास्तव्यास्तु अर्थमात्रोपजीविनो धर्ममपि स्वल्पादपि स्वल्पमनुचरन्ति बहव:। यद्यपि ग्राम्यजीवनं निश्छलप्रेमभरितहृदयात्मनां तथापि न केवलमनेनैवोदरपूर्तिर्जीवनविकाशो वा तदर्थं तदनुकूला शिक्षा नगरेष्वेव दीयतेऽधुना, यामधिकृत्य स्वाभिमतं साधयति पूरयति जन:। अतो नगरजीवनमपि प्रशस्यमेव।

द्वितीयो निश्श्वासः

## नगरवर्णनम्

दृश्यन्ते भवनानि नोच्चगिरिवन्मार्गाश्च सौख्यप्रदाः
व्यस्तस्सर्वजनः प्रयाति नितरां पृष्टो न सम्भाषते।
वीथ्यां वापथि हट्टगेहगगने व्याप्तं च कोलाहलं
हा हा हन्त सखे विचित्रनगरं कस्मै न तद्रोचते।।१

आत्मीयं प्रविलोक्य नेत्रयुगलं कृत्वा क्वचिल्लोकते
आयातं च विभाव्य नास्ति स गृहे निस्सार्यते द्वारतः।
नो ब्रूते प्रतिवेशिनोऽपरिचितः स्वार्थी जनो नागरो
यत्रैतन्नगरं सखे सुखकरं कस्मै न तद्रोचते।।२

किञ्च सखे श्रूयतामिदमपि—

सिंहं व्याघ्रं च सर्पं च नक्रं गजं च भल्लुकम्।
वशीकृत्य नरश्शूरः पत्न्या भीतोऽवसीदति।।३

समुद्रतरणं मित्र शैलशिखरोहणम्।
सरलं दुष्करं लोके कामिनीकोपलोपनम्।।४

क्व पूर्यते स्वप्नः? ममापि जीवने एकदा अयमभिलाषोऽपूर्णतां गतः, तमेवाहं भ्रमरब्याजेन श्रावयामि—

हा हन्त भो भ्रमर गच्छ च गच्छ मूढ

द्रष्टुं पुनः प्रयतसे मुकुलं यदद्य।

कश्चित्परागपरिपूर्णमहो प्रभाते

नीत्वैव तद्विकसितं कमलं प्रयातः।।५

इह हि नानानवीनपरिधानविधानधनजनानां गगनचुम्बिभवने नरलोके सुरलोकसुखमग्नानां दूरदर्शनदर्श्यमानवृत्तनृत्यकथादिलोकनश्रवणसंजातविस्मयामोदानां नगरं वर्ण्यते सखे! सङ्गणकशक्तिमन्तो यत्र कस्मिंश्चित्कोणमुपविश्याधिशयाना वा विशालं विश्वमकरमपि करे दधाना असहाया अपि यन्त्रसहाया जीवन्त्येव। किञ्च नगरं हि नाम स्वस्वकर्मसम्पादनव्यस्तानामितस्ततो धावतामुद्योगिजनानां कर्म्मभूमिः।

घटिका मातृका यस्य पत्नी मित्रं पिता गुरुः।

देवता बन्धवश्चैव स जनो नागरस्स्मृतः।।६

यत्र घटिकया सूचितो जागर्ति, नित्यक्रियां निष्पादयति, समागतानालपति, आदिनं व्यस्ततामभिनयति जनस्तदेव नगरमित्यभिधीयते।यत्र चलन्ति लोकाः पादाभ्यां शकटेन वाहनेन, परन्तु वशवर्तिनो घटिकाया एव। प्रियतरशिशुकमलमुखसौन्दर्य हृतवदना अपि परिचुम्ब्य पत्नीजनक्रोडस्थशिशुंहस्तदोलनपूर्वकं 'टाटेति' ध्वनिना झटित्यागच्छामीति मिलनविश्वासोत्पादिवचनानि वदन्तः, कदाचिन्निजघटिकामुखाकृष्टा गवाक्षाश्रितप्रेयसी संकेतरोमांचितशरीराः द्वारस्थहिम—करास्यभार्यानयनपथगामिनः स्वाभिमताकूतं प्रदर्श्य मार्गे मिलितात्मीयजनमन्वीक्ष्यापि परोक्षत्वं नाटयन्तः कदाचिदभिमुखे स्वल्पमभिधाय वारं वारं घटिकावलोकनतत्परा बन्धनमुक्तजीवा इव पलायन्ते कर्मक्षेत्रं प्रति।

वर्तनं कृत्रिमं यस्य शत्रौ मित्रेषु मन्दिरे।

ईर्ष्यासूयास्वभावोऽयं नागरो नागरोरगः।।७

हन्त! धिग्घटिकावशगानां नगरनिवासिनां जीवनम्। यत्र रात्रिरपि दिनमिव, स्वजनोऽपि परजन इव, सुहृदपि दुर्हृदिव जनैरवलोक्यते, तन्नगरमिति विजानीहि वयस्य! प्रायः सर्वोऽपि नागरो भार्यातीक्ष्णबाणवचनादिभयभीतो निजमातापितृबन्धुमित्रविमुखः परिहृतपरार्थः स्वार्थाभिलाषःपौरुषं विस्मरन्

तत्पारतन्त्र्यमङ्गीकरोति स्वेच्छ्येति नैतदविज्ञातं कस्यचिदपि। अतो नगरे महिला प्राधान्य–समाजः स्वीकार्यः।

मार्गस्तु नगरस्य सखे! पदातिपंक्तिसंकुचितः कारवसयानवाहनसंकुलो दुर्गम एव। यत्र लघ्वसावधानता घटनां धटयत्यवश्यमेव। शीघ्रातिशीघ्रगमनातुरा द्रुततया स्ववाहनं परिचालयन्तः स्वकार्यालयं गन्तुमीहन्ते। अत्रान्तरे गमनवेलाहानशङ्का–विस्मृतवाहनचालननियमोऽतिवेगवशमायातो दुर्दैवात् मरणमुपयातीवेति दैनिकवृत्तमेतत्। मार्गपारगमनेच्छुकः कश्चित् पदातिर्दुर्घटनाभयलोलनेत्रः सहस्रलोचनः सन्नुत्प्लुत्य विहग इव प्रयाति, अन्यथा नेनीयते चिकित्सालयेषु दयार्द्रहृदयैरिति, प्राणानपि विमुञ्चति विकलो जनोऽहृदजनैर्हीयमानो मार्ग एव। क्वचित् तु पदातिजनसमूहो वाहनैर्यूकालिक्षामत्कुण–चूर्णीकरणमिव चूर्णीक्रियते। हा हन्त! नद्यां वर्द्धमानो वर्षर्तौ सलिलराशिरिव द्रढीयान् जनसम्मर्दो नगरे कं न भाययति।

अये! श्रुतिमधुरकटुरसोत्पादिध्वनियन्त्रमुखरता, या स्वच्छन्दमुच्चस्वरारूढ कर्णविवर–स्फालनक्षमा यत्किमपि विज्ञापनव्यग्रा सर्वजनास्याकर्षणकुशला वसुधां कम्पयतीव, शिशुबालवृद्ध–हृदयवेपथुवर्धयित्री मार्गान्मार्गं, वीथ्यां वीथिं प्रति भ्रमन्ती पटुपटहताडनोत्थितदृढधनगर्जनमिव सर्वतो भयमुत्पादयन्ती विच्छिन्ननासापुटरोदनघोषा शूर्पणखा वनमिव परिचरति नगरप्रान्तम्। दुमदुमेतिहृद्विदारकरवो यावन्नाग्रे प्रसर्पति तावन्न जनो लभते स्वाथ्यम्।

अहो! सकारणाकारणमान्दोलनमपि नगरवासिनां जीवनं दुःखमयं करोतीव। मित्रवर! सहस्रजनसम्मर्दा धृतस्वदलपताका निजदलाभिवादनपदघोषनिखिलशक्तयो विपक्षिदलकटुनिर्भर्त्सनोक्तिभिर्जयजयेति भीत्युपादकनिर्घोषैर्मार्गमटतश्चलतोऽपसार–यन्तो मार्गतटविपणिं लुण्ठन्तः सर्वकारस्य सम्पदो वाहनानि प्रणाशयन्तः सार्वजनिकवस्तूनि प्रज्वालयन्त आरक्षिरुद्ध–गमनमार्गमपि कदाचिदवमत्य दानवसैन्यमिव आपणं शून्यमिव विधाय निजसभास्थलं प्रयान्ति। संजाते तूपद्रवे प्राप्ताधिकारिसंकेतैरारक्षिदलैर्दण्डैर्दृढं ताड्यमानास्त्रुटितमौलयः शीर्णकंचुकाः विखण्डितहस्तपादसन्धयो मातः पितः इति वदन्तः पलायन्ते। हन्त! नगरशान्तता भवति मृता कतिपयानि दिनानि यावदिति।

इत्थम्भूते नगरेऽपि रमते मनो न केषाम्? यतोहि नगरं मायाजालमिवाकर्षति सर्वानपि। एकत्र सुसज्जितापसारितविविधशाटीकंचुकपटानि कं कां वा न बलादाह्वयन्ति। स्पृहणीयशाटिका–मनोहरणक्षमा अनेकाः पुत्तलिका अप्सरस इव प्रतिभान्ति, यामवलोक्य तदितरवस्तुक्रयार्थं नीतं वित्तमपि तत्क्रयणे व्ययीभवति। अपरत्र

सौन्दर्यप्रसाधनविपणिलक्षमपि चेतो द्रुतमेव द्रवीकरोतीव, यत्रोल्लिखितं चित्रितं च दृश्यते 'यदेतत्प्रयोगद्वारा पंचसु दिवसेष्वेव वृद्धो युवेव, वृद्धा युवतीव, कृष्णो गौरः, कृष्णा गौरवर्णा सकलजनदृष्टिविषया नूनमेव भविता नान्यथा क्रयधनराशिमागत्य निस्संकोचं ग्राह्यम्।' आयुर्वेदसुविहितप्रयोगनिर्मितमिदमौषधं शुभ्रकेशन्तु दिनद्वये सघनकृष्णकेशं, म्रियमाणह्रस्वकेशां त्वरितमेव विलम्बिदीर्घचिकुरां, खल्वाटमपि प्रचुरकेशशिरस्कं करिष्यत्येवेति बहुभिः प्रयुक्तं गृह्यताम्। एतद्विज्ञापनप्रलोभितो निजाभिरूपावाप्तये कश्चिद् वैतद्विज्ञापनाकृष्टा काचिदात्म—सौन्दर्यवर्धनाभिलाषा पतिं तूर्ष्णीं कृत्वा क्रेतव्यानि वस्तूनि विस्मृत्याविचार्य लाभालाभौ तानि तानि क्रीणाति। अन्यत्र नीलरक्तपीत धवलशाटीचित्तचौररमणीजनसमूहो नेत्रोत्सवानन्दकरः सखे! यस्मिन् नीलाम्बरा कषकटितटा प्रकटितपुष्टस्तना परिभ्रमणशीलयुवजनहृदि संविशन्ती पर्यटति। रक्तपटा तु मुक्तकचकलापा रचितकज्जललोचना सखीजनवार्तालापमग्ना युवतीजनवीक्षण निहितनयनान् लोलापाङ्गैर्वशीकुर्वाणा रतीव शोभावितानं तनुते तन्वी। पीतशाटिका तु विरचितलम्बमानचिकुरवेणी—ताड्यमानस्तनप्रदेशा पृथुकटिप्रान्ता संलापचित्ता मन्दं मन्दं स्मयमाना अनुगामिनो यूनो येन केन व्याजेन सकटाक्षं प्रेक्षमाणा कदाचित् स्वसखीमुखं स्पृशन्ती, किमपि कर्णयोर्मन्त्रयन्ती विशिष्टांचितहावभावया व्यक्तविलसद्यौवनापसारितोत्तरीयया दुग्धधवलशरीरप्रमाणातिलघुवस्त्रया प्रदर्शित सर्वातिशायिमोहिनीरूपाडम्बरयया समुन्नतोपानच्चरणया श्लिष्टपटया साकं स्वादु अपवारितमिव वदन्ती पथिकजनामन्दानन्दं तन्वाना देदृश्यते जनोघेन।

वयस्य! क्वचिद् व्यतीतपंचाधिकपाणिग्रहवत्सरा अप्सरा इवात्मानं प्रकटयन्ती लिम्पितौष्ठा स्वशिशुं पतिक्रोडीकृत्य त्रिचतुर्वर्षदेशीयात्मजं प्रतिवेशिगृहे निक्षिप्य निजपतिजनमपरिचितमिवान्यान् दर्शयन्ती अग्रे अग्रे पृथुलदेहा दोलायमानकण्ठहारा नृत्यत्स्वर्णकर्णाभूषणा वार्तालापयन्त्रहस्ता युवतिजनमतिक्रान्तुमीहते। आसु काचित् स्वयं कञ्चित् सुन्दरं स्पष्टं सव्याजं वाप्रेक्षते, किन्तु पतिजनं वारयति युवतिमहिलाप्रेक्षणाद् भर्त्सयत्यपि। अन्यजनस्पष्टा तदनु पृष्टा मधुरोत्तरा पतिजनपृष्टा कटूत्तरापणं परिक्रम्य क्रीणाति स्वाभिलषितानि वाहयति पतिमिति नातिचित्रम्।

काश्चित्तु सायन्तन एवाकर्षकनिजवस्त्रं परिधाय वस्त्रालयमाविश्यदशाधिकं प्रेक्ष्य कियन्मूल्यमिति स्पष्ट्वा संकुचितनासिका वक्रानना तत्तु विहायाग्रिमविपणिसोपानमार्गम धिरोहन्ति। तत्राप्येवं कृत्वा भाण्डागारं गता दर्विकटाहजलपात्रादिमूल्यं विज्ञाय चमसमपि न क्रीणन्ति। हन्त! हसन्ति विक्रेतारो द्रष्टारश्चेति। नातःपरं गृहम्प्रति निवर्तन्ते। बहुजनसंकुला

दृश्यमानशाकापणं मत्स्या जलराशिमिव प्रविश्य ज्ञातमूलिकाकोषातकीकूष्माण डरक्तवृन्ताकपलाण्डूलशुनमूल्या पुनः पुनः पृष्ट्वा द्वित्राणि शाकानि क्रीत्वागृहमायाता परिश्रान्ता विश्रामं लभन्ते प्रकामम्। एवमेव पुरुषा अपि बहवोऽस्मादृशा अकारणा विष्कृतकार्याः परित्यक्तगवेन्द्रा इव परिभ्रम्यापणं रात्रिकाले प्रत्यावर्तन्ते स्वगेहमिति को न जानाति, काश्यान्तु केचन ताम्बूलाव्याजेन विनिर्गता यथेप्सितं साधयित्वायान्ति, केचन भगवद्विश्वनाथदर्शनाभिलाषिणो गङ्गाघट्टमुपासीना गङ्गामनुस्मरन् समयमतिवाहयन्ति, अपरस्तु संकटमोचनदर्शनसमुत्सुको गृहात् निर्गतोऽपि न मन्दिरपरिसरेऽवलोक्यते। हन्त! असत्यमाह कश्चित् 'काश्यां मरणान्मुक्तिः' अत्र तूभयोर्मया जीवन्मुक्तिर्दृष्टा। तया पृष्टो मन्दिरं गत आसमिति ब्रूते, तेन पृष्टा गङ्गास्नानार्थमहमासं गतेति प्रोच्य सर्वथा सन्देहमुक्तिः। सन्दिग्धमिदं वचनं माम्मटं 'वापीस्नानमितो गतासि न पुनस्तस्याधमस्यान्तिकम्।'अत्र कदाचिद् गङ्गास्नानमितो गतासि न पुनरिति साधु मन्तव्यम्। सखे! परिहीयतामयं जल्पः, हास्योपादानको न परमार्थेन गृह्यतामिति।

अये! विस्मृतमिदं दाम्पत्यजीवनं यद्धि पूर्वमभिधेयं मयाधुना वर्ण्यते।

सखे! नगरे तु नार्यः विलक्षणमतय एव दृश्यन्ते, श्रूयतामिदं–

कठोराः प्रस्तराच्चैव कोमलाः कदलीफलात्।
भार्या लोके सुहृत् काश्चिन्नारिकेलफलोपमाः।।८

ममापि कदाचित्–

पृष्टा भाषत एव नाद्य गृहिणी स्पष्टा प्रयात्यन्यतः
रुद्धा द्वारमुपागता झटिति सा पृष्ठे करोत्याननम्।
अंगुल्यग्रधृतासरोजवदना मन्दस्मितैरानतं
रुष्टा मां मृदु वीक्षते सुरमणी कुर्यामहं किं सखे।।९

काश्चिद् रुष्टा तु दर्शनीयैवभवति। हन्त! अवलोक्यतामिदं पद्यम्।–

भग्नं भाग्यमहो मदीयमधुना साकं त्वया मन्दभाक्
संजातं करपीडनं प्रियपते यस्मिन् दिने श्रूयताम्।
धिग् धिक्तं विधिमद्य येन विहितं वैवाहिकं मङ्गलं
भार्या कस्य न जल्पति प्रतिगृहं प्रेम्णा रुषा वाप्रियम्।।१०

कश्चित्तु स्वां गृहिणीं मानयितुमेवं वक्ति।—

दृष्ट्वा त्वदीयमुखपङ्कजमद्य सद्य:

सम्मोहित: प्रियतमे शृणु मूर्च्छितोऽस्मि।

तत्तत्स्मरामि नलिनीदलकोमलांगि

रोमांचकारि लपितं हृदये पिनद्धम्।।११

किञ्चाग्रे ब्रूते—

एक: पतिस्स्वसुमुखीमुखचुम्बनार्थं

गत्वावदत्प्रियतमे नवकण्ठहारम्।

क्रेतुं प्रयामि मम भामिनि पश्य पश्य

किन्ते मुखेऽस्ति निगदन् सुचिरं चुचुम्ब।।१२

इह हि दाम्पत्यजीवनं नाम सर्वानन्दप्रदं मधुरं किमप्यद्वितीयमवर्णनीयं किञ्च मानवजीवनस्याधार—भूतविशिष्टं विश्रामस्थलम्। यत्राध्ययनकालिकगुरुताडनजनित बोधलाभाभ्युदयो जीवनयात्रा—जायमानसकलरोगप्रणाशनसमर्थौषधमिवोपयुज्यते। गृहस्थाश्रमोऽपरलोक इवाभाति। स्वस्वकुल—परम्परापाणिग्रहविधिमनुसृत्य लौकिका वरं वृण्वते निजकन्यकायै। वह्निसाक्ष्यमुपकल्प्य वैवाहिकसूत्राबद्धो गृहस्थ: सुखानि दु:खानि वा हसन्नेव सहते। भारतीयसंस्कृतिलोप: सखे! त्वरितगत्या दृश्यमानो वर्तते। पश्चिमसभ्यताकुप्रभावाकृष्टा हि शिक्षिता भारतीया: प्रेमविवाहसमर्थनतत्परा: किंवा स्वजातिसम्प्रदायदेशमनुपेक्ष्य मातृपित्रभिभावकसम्बन्धिबन्धु—जनोदितोपयुक्तपर मार्शवचनान्यवमत्यनिजप्रेमिप्रेमिकाजनेन साकं कृतप्रतिज्ञा बद्धपरिकरा अवलोक्यन्ते। हन्त! नैतदुचितम्। न केवलं रतिजसुखोपभोग एव दाम्पत्यजीवनोद्देश्यम्। धर्मस्यानुसारेण सृष्टे: संरक्षणाय सन्तत्युपादनमिति विस्मृत्य रूपलावण्याकर्षणवशीभूतानां कामातुराणांक्व धर्मभयं क्व लोकलज्जा? एतदपि विस्मयकरं वृत्तन्तु समलैंगिकविवाहनामकं त्यक्तप्रकृतिनियमानाम्। वैदेशिकसर्वकारैस्तु कतिपयै: संविधानसंरक्षणमस्मै प्रदत्तम्। भारतेऽपि प्रयतन्ते कामवृत्त्युपजीविनो बहव इति; परन्तु वृत्तमेतदस्ति घृणास्पदम्। धन्यं प्राचीनं शास्त्रगुरुपरम्परानुमोदितं दाम्पत्यम्, यत्र गुणवते कन्यकां प्रदायकथं पतिकुले वस्तव्यमित्यपि निर्दिश्य पितरो मुदमनुभवन्ति स्म;परन्तु नाधुनिके कलिकरालकाले इत्थं दृश्यते। न कुलं न शीलं न ज्ञातिजनं न चापि बन्धुवर्गं पश्यन्ति केचन

धनमात्रापेक्षिजनाः। 'कन्या कामयते रूपं माता वित्तं पिता श्रुतम्। बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः। 'इत्यपि न विचारयन्ति।अस्मादेव कारणाद् ध्वंसते समाजः, संयुक्तपरिवार एकलपरिवारतामेति, परस्परबन्धुस्नेहोऽपक्षीयते, मातापितरावपि दूयेते। केवलं पतिपत्नीरूप एव संसारोऽनयोरुभयोरिति। इत्थं विवाहितास्तु परस्परं कलहायमाना विवदमानाश्च जीवनं जीवन्ति,काश्चन विवाहोच्छेदमपि श्रेयस्करं मत्वा पृथगेव स्वतन्त्रामयं जीवनं जीवितुमुत्सहन्ते। साम्प्रतिकं दाम्पत्यजीवनन्तु महद्विस्मयोत्पादकम्। यत्र सर्वोऽपि रस आस्वाद्यते। नवपरिणयाः परस्परोवलोकनस्पर्शनचुम्बनादिक्रियामग्नाः सव्याजं परित्यक्तगृहसदस्यभीतयः येन केन मार्गेण नयनाभ्यामेव वार्तां कर्तुं व्याकुला विज्ञायन्ते। गुरुजनादेशव्यथिता मन्त्रप्रभावव्यथाकुलः सर्प इव सीदन्ति, न तत्कार्यं यथावत् सम्पादयितुं प्रवर्तन्ते। अहह! शृंगारमयं जीवनन्तदानीन्तनं क्रीडानिर्भरमानसं न केषामीप्सिततम्? युगपरिवर्तनं संजातमधुना, पुरुषा बहवस्तु गृहकार्यमेव निर्वर्तयन्ति वृत्त्युपजीविनोऽवृत्तिजीविनो वा। पूर्वं भार्या भर्तृमार्गावलोकनपरासीत्। सत्यमाह निरंजनो मिश्रः—

आयाति कान्त इतिवाक्यरसामृतेन
तृप्ता प्रसन्नवदना भवतीह काचित्।
कृत्वा करे स्वमुकुरं रहसि स्थिता सा
किञ्चिद्विलोक्य वदने किल सीत्करोति।।१३

परन्तु साम्प्रतन्तु कार्यातिपातवशाद् दूरं प्रस्थितां भार्यागमनमार्गमवलोकयन् गृहजकार्याणि निर्वतयन्नपि सर्वत्र तामेवोत्प्रेक्षते भर्ता। न भुंक्ते, न स्वपिति, नान्यमालपति, न गुरुजनभिभाषते सम्मानयति वा। असौ तूत्पद्यमानमदनांकुरहृदयः तामेवानुस्मरन् लब्धदाम्पत्यसुखातिरेकस्तु जातमात्रैकविवाहवत्सरः पतिः पत्नीं प्रतीक्षमाणः तावद्विस्मरति सर्वमपि व्यवहारजातम्।

श्रूयतामिदं भोः! क्षीरान्ने लवणं ददाति सहसा शाके क्षिपन् शर्करां
पूजायामपि गायतीहमधुरं गानं न दुर्गास्तवम्।
वारं वारमहो! कथं स्वघटिकासंप्रेक्षणव्याकुलः
प्रेम्णो वारिनिमज्जितोऽपि कुरुते नो सज्जनश्चापलम्।।१४

स्त्रियोऽपि एवं व्यवहारशीलाः काश्चन एव नगरे प्राप्यन्ते; न तु सर्वा

एतादृशव्यवहारवर्तिन्यः, काश्चन स्वनामधन्या वामास्तु पतिजनभीत्यैव कुर्वत्यो दृष्टिपथमायान्ति। वयस्य! दृप्तास्तु न किञ्चिदपि कुर्वाणा भर्त्रागमनागनविचारशून्या स्वकर्मलीना एवेति न विस्मयः। इमास्तु कोऽयं पतिः, कस्मात् पतिः, अहमस्मि पतिरित्यभिधाय पतिजनमादिशन्ति। तद्भयभीतकम्पितदेहस्तदाज्ञामीश्वरानुज्ञामिव शिरसि धारयन् तद्रूपाकर्षणपाशवशगस्तदेवारभते, मित्रसंसद्गतो बहिस्तु वीरायते दाम्पत्यवाद–विवादे। कुटिलास्तु निद्रामग्ना समुत्थितजनसंकुलेऽपि प्रभाते पतिं समादिशन्तीत्थम्। यथा–

पात्रं वस्त्रमिदं विधाय विमलं स्वच्छञ्च कृत्वा गृहं
संस्नाप्यैव शिशुं निपाय्य च पयश्शाकं च तत्कर्तय।
पिण्डं पिष्टमिदं कुरुष्व सुपते निर्मीयतां भोजनं
नैवं गर्जीति ते प्रियाब्जनयना मत्प्रेयसीवत्सखे!।१५

अनेकास्तु दूरवाण्या समक्षं परोक्षं वराकपतिं प्रेमभरितवचोभिर्वञ्चयन्त्योऽन्यं कमपि प्रियजनं स्वाभिप्रायं प्रकटयन्त्यो ब्रूवते। यथा काचित्

अन्यैर्विहस्य पुरुषैः सह संलपन्ती
स्वीयं पतिं गुणनिधिं बहु तर्जयन्ती।
मात्रैकचुम्बनरसं मधु पाययन्ती
नार्यो न किंपतिजनाद् विमुखीभवन्ति? १६

अथ च

सत्यं वदामि पतिदेव तवैव चित्रं
नित्यं मदीयहृदये न विराजमानम्।
इत्थं कटाक्षदशकेन निरीक्षमाणं
स्वीयं प्रियं कतिपया न विमोहयन्ति?। १७

सत्यमाह शूद्रकः–अशिक्षितं नारीणां पटुत्वम्। वयस्य! एतदपि श्रूयताम्

या प्रातर्मृदुविष्टरे निपतिता शेते विनिद्रा सती
चायं चायमिति प्रजल्पनपरा सम्बोधयन्ती पतिम्।

मध्याह्ने कृतभोजना विवदते दर्विःकरारोषत–
स्तस्याः पादतले पतन्ति न हि के वीरा बुधाः पण्डिताः।।१८

हन्त! वीरोऽपि नागरः भार्याभयभीतो दृष्टः। यथा–

विनतो गेहमायाति प्रणतो याति गेहतः।
सन्न्यासीव गृहस्थोऽपि वराकः न कथं सखे।।१९

इतोऽग्रे कश्चित्तु स्वभार्यावचनकुपितो मुनिमुपसृत्य प्राह, तदिदमाकर्ण्यताम्–

कुर्यां किमद्य कुपितः स्वकलत्रतप्तः
शान्तिः गता क्व मम जीवनतो मुनीश।
नैजव्यथां कथितवान् मुनिना स चोक्तः
आगच्छ भो वनमिदं वनितां विहाय।।२०

त्यक्त्वालङ्करणं स्वकोपसदनेऽशय्यां गतारीतितो
नाधत्ते सुपदं मनोऽभिरुचितं शब्दार्थसङ्गुफितम्।
स्पष्टाव्यक्तवचोभिरद्य कुपिता ब्रूतेऽप्रियं मत्प्रिया
किं कुर्यां वनितेव मित्र कविता सुप्ता चिरात्सेव्यते।।२१

एकदा तु मयैव साकमिदमभवत्। हन्त श्रावयामि–

भार्याव्यङ्ग्यशराहतोऽश्रुनयः कश्चित्तु काश्याः कवि–
र्वैराग्याङ्कुरमानसश्श्रुतमतिर्द्वारं ययौ वेगतः।
सद्यस्तद्गृहिणीकराम्बुजसुखस्पर्शैर्जितो मोहित–
स्तत्याजेति कमण्डलूं न गतवान् कौपीनपाणिर्गृहात्।।२२

सखे! महानयं विषयो हेय एवेदानीम्। इतोऽग्रे शृणु। नागरिको भवति चतुर इति मत्वैव ग्राम्यवृद्धैः कदाचिदिदमुक्तं स्यात् कस्यचिन्मन्दमतिबालकस्य विषये यत् पठेच्चेत्

पाठ्यताम्, न पठेच्चेन्नगरे प्रेष्यताम्। सत्यमिदमालक्षितम्। यथोक्तं नगरे प्राप्तावबोधाः स्वार्थपरायणा बहवो मृषावादिनो वसन्ति, येषां नाम गिनिजपुस्तके लेखनीयं मन्यते।

हन्त! श्रूयतां यदि कश्चित्सुहृदेव मृषावादी स्याच्चेत्किं करणीयम्? तद्विषये मया बहु कथितं काव्यसुधाब्धौ। तद्यत् मित्रमुद्दिश्य—

किन्त्वं विवक्षसि समक्षमहो न जाने
यद्भाषितं तदपि पूर्वमहं स्मरामि।
सन्मित्र भो वद मृषाद्य विहस्य शीघ्रं
मामेव संस्मरसि नान्यजनं कदाचित्।।२३
दूरं यासि कथं मत्तो वर्तमानो हृदि प्रिय।
दृश्यते चक्षुषा लोके धूमोऽनलात्पृथक् क्वचित्।।२४

उपेक्ष्यमाण एवैष दृष्ट्या वाचाप्यहर्निशम्।
त्यक्तुं त्वामसमर्थोऽस्मि यथा मत्स्यो जलं सखे।।२५

मानवं मा नवं प्राप्य विस्मर मित्र मित्रताम्।
सुलभा शत्रुता लोके सन्मैत्री दुर्लभामृता।।२६
मुञ्च वाक्सलिलं शीघ्रं भो सुहृन्मेघ साम्प्रतम्।
नत्वा न त्वां ब्रवीम्येतत् रक्ष्यतां मित्रचातकः।।२७

न रागो दर्श्यते रागान्न स्नेहः स्नेहजः क्वचित्।
अहो किं कृत्रिमः सर्वो व्यवहारो विलोक्यते।।२८

समवायस्तु सम्बन्ध आवयोयश्च लक्षितः।
हा हन्त स कथं मित्र संयोगं समुपागतः।।२९

अद्य यावन्मया मित्र हृदये त्वं सुरक्षितः।
प्रतिज्ञातं त्वया गन्तुं गम्यतां गम्यतां मुदा।।३०

श्रूयतां मद्वचः किन्तु समयो यदि वर्तते।
कृपाणं कृपण! प्रीत्या सत्वरं क्रियतां हृदि।।३१

बहूनि नो व्यतीतानि दिनानि सुहृदस्तव।
व्यस्ततां भाषमाणस्य हन्ताद्य रविवासरः।।३२

अन्यथा लिख्यतां मित्र विचिन्त्य नूतनं वचः।
मृषावादिन् क्व ते कोशे शब्ददारिद्र्यदर्शनम्।।३३

विकसन्ति सुमान्यत्र बहूनि विविधानि भो।
ब्रूहयुरविन्दसाम्यं किं कुसुमं लभतेऽधुना।।३४

प्रतिज्ञाय कथं त्वां नो विस्मरामि पुनः हृदा।
निस्सन्देहं त्वयामित्र हृदयं चोरितं मम।।३५
कथं मामवलोक्यैवं सम्मुखं सुहृदं निजम्।
विमुखो दृश्यसे मित्र हा हन्त प्रपलायितः।।३६

तद्दिनं विस्मृतं यस्मिन् साकमासहन्त्वया।
शरीरयुगलं किन्तु हृदयमेकमेव नौ।।३७

उद्याने विकसन्ति मित्र बहुशः पुष्पाण्यहो प्रायशः
किं याति भ्रमरोऽरविन्दमिति भोः त्यक्त्वा क्वचिल्लोलुपः।
रागान्नित्यपरागसौरभरसं संसेवमानश्चिरं
लोकेऽलौकिकसौख्यमेष लभते नो सेवते किंशुकम्।।३८

श्रुत्वा कञ्चित् रवं शीघ्रं सुप्ता जागरिता ध्रुवाः।
सहर्षं निगदन्त्येव वयस्या वायसा इव।।३९

सखे! अहं स्वमित्रं न कदापि त्यक्तुमभिलषामि। न मह्यं मृषावादी रोचते, यो हि सामान्येऽपि सदवसरे मृषासम्भाषणतत्परो दृश्येत। यो गृहे सन् स्वमित्रेणाकार्य–माणो दूरवाण्या द्वारवर्तिना वा पत्नीमुखेन बहिर्गत इति ज्ञापयति। कदाचिच्छौचालयं गतः, कदाचित्स्नाति, कदाचिदर्चति देवानिति मिथ्याजल्पको नैव केनचिदपि समाद्रियते। एतादशो जनस्तु मन्दिरं गतोऽपि न सत्यं भाषते। अतस्तन्तु जनमहवकरमिव दूरं क्षिपामि, अन्यैश्चापि क्षेप्तव्यः स इति निवेदयामि। न जाने शतधोपकृतोऽपि कस्मादसत्यमभिभाषते। स्वकार्यकाले स्निह्यति, सादरमालपति, प्रशंसति, आत्मीयत्वं दर्शयति, आश्वासयति कृकलाश इव रूपमाविष्कृत्य कार्यं कारयित्वैवान्येन केनचित् सहृदयेन तं पूर्वजन्ममिलितजनमिव विस्मरति। हन्त! मित्रत्वमपि दूषितमेव। वयस्य! इमे मृषावादिनो नालिकाकीटा इव स्वजीवनं मृषापंकमग्नाः सन्तो यापयित्वा न विश्वासभूमिमधिरोहन्ति केषामपि। पूर्वदिग्गमनशीलोऽपि पश्चिमदिशि वर्ते इति ब्रूते। धिङ्मृषावादिनम्। यः सर्वदासत्यवर्त्मस्थः सर्वान् स्पृहणीयमृषाप्रलापनैः वशीकर्तुमीहते। कदाचिल्लब्धस्वार्थो न चिरमपितु बालुकानिर्मितभित्तिरिव सुजनचित्तात् भ्रश्यति। यद्यपि अयं हि मृषावादी जानाति सर्वं तथापि रचयति वाग्जालम्। वार्तालापाडम्बरकुशलो ऽसत्यप्रलापिजनो न कैश्चिदपि हृदयेन सम्मान्यते, अयन्तु एरण्डवृक्ष इव स्वमूलैरपि हीयमानो निपात्यते लघुवायुवेगप्रभावितः। मित्र! न हि मृत्तिकानिर्मिता घण्टिका दीर्घध्वनिं कुरुते। ध्वनिस्तु लौहमयी घण्टिकयैव श्रूयते। अनवरतासत्यभाषणशीलास्तु ग्राम्यकुक्कुरा इव सर्वैरपि दुत्क्रियन्ते। इमेऽवसरलाभाकांक्षिणोऽसत्यसम्भाषणदक्षा महान्तमपि दुस्साध्यं कार्यं क्षणमेव साधयन्ति यत्सत्यवादी कदाचिद्विलम्बेन साधयितुं शक्नुयादिति। मन्येऽहं यल्लोभमोहभय–स्वार्थवशादेव तेऽवितथमालपन्ति सामान्येऽवसरेऽपि। एतेऽसत्यमुक्त्वा विहसन्ति' मयासौ मूर्खीकृत ' इति कथयित्वात्मानं सुखिनं मन्यन्ते। हन्त! इमे निर्लज्जा

हृदयेनानुभवन्तोऽपि न त्रपन्ते। यद्यपि मृषावादिनो मित्राणि दूरमपरसरन्ति दुष्टाधिपतौ सुजनप्रस्थानमिव, क्षयमुपयान्ति शुष्कवृक्ष–पत्राणीव, स्वबन्धुभिरपि तिरस्क्रियन्ते दुर्जना इव, गुरुभिरुपेक्ष्यते भवन्ति निन्दाभाजश्च चौरा इव , सामाजिकैरुपहासपात्रीक्रियन्ते समक्षं परोक्षं वा निन्दितपुरुषा इव। तथापि न विश्राम्यन्ति क्षुद्रनद्य इव वर्षागमे, दुर्जना इव बलसमुत्थाने, निहितनालिकामुखशूकरा इवापशिष्टजुष्टलाभे हन्त! वयस्य एते तु गुरुजनमपि वंचयन्ति वंचका इव, लुण्ठन्ति लुण्ठका इव, निन्दन्ति निन्दका इवासकृदुपकृता अपि, शोषयन्ति शिष्यानुजानंश्च प्रचण्डसूर्य सरित इव। परन्तु मधुरवृत्तकथनप्रवीणाः कुपितानपि वशीकर्तुं सक्षमाः शत्रव इवोपेक्षणीया इति मन्मतम्। यदुक्तं सत्यं केनचिद् यथा–

परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्।।४०

एषु बहवः कवयः तान्प्रति वच्मि–
संसारे कवयो वसन्ति बहवो येषां च काव्यं कथं
सर्वान् मोहयतीव नो सहृदयान् नैतद्विचित्रं सखे।
सत्यं श्रीभवभूतिना प्रकथितं चोत्पत्स्यते मादृशः
तस्मै सत्कवये लिखामि कपये नो श्रूयतां बन्धवः।।४१

काणः सुतोऽपि रमणः सुभगः स्वकीयः
हेयः परस्य गुणवान् यदि दर्शनीयः।
इत्थं कवेश्चजगतः सुकृतं मदीयं
चेतो दुनोति विमलं सहसा विचित्रम्।।४२
यल्लिख्यते स्म रुचिरं सुचिरं सदैव
त्वं नापठो वद न सत्यमिदं मदुक्तम्।

दृष्ट्वाद्य यासि सहसा विमुखो न मित्र
भित्वा दशैव हृदयं हृदयेश चित्रम्।।४३

मुखे रामः सदा यस्य कृपाणः करद्वन्द्वके।
स जनः साधुरेवाद्य व्यवहारस्तु दर्पणः।।४४

तद्दिनं विस्मृतं यस्मिन् साकमासहन्त्वया।
शरीरयुगलं किन्तु हृदयमेकमेव नौ।।४५

श्रूयते मित्र खिन्नस्त्वं यतो मां समुपेक्षसे।
समायाते स्वयं काले संस्मरिष्यसि लज्जितः।।४६

क्षिप्रं क्षिपसि यं मत्त! मत्वा हेयमहो सखे।
स त्वयान्विष्यते हन्त दीपहस्तेन सत्वरम्।।४७

इमेऽसत्यभाषिणो नीचपुरुषाः परार्थशून्याः स्वार्थं कामयमाना भर्तृहरिमततृतीयपुरुषा इव कदाचिन्निगृहीताः स्वासत्यप्रलापैर्व्याघ्रतर्जनगर्जनभीतशृगाल इव, मार्जारधृतमूषिका इव गृहकोणे जनेन दण्डेन ताड्यमानबाह्यकुक्कुरा इव भित्तिसन्धिस्थलनिगृहीतचौरा इव कारागारनिक्षिप्ता आरक्षिभिः पुष्टदण्डताडिता इव शब्ददण्डैरधोमुखा भूत्वापि कुत्सितकृत्यतुष्टा न निजमार्गाच्च्यवन्ते। सत्यमाह ग्राम्यवृद्धो 'यन्न शुनः पुच्छो वक्रत्वं जहाति'। अतोऽपहाय वर्ततां यथाशक्यं सत्यवर्त्मनि। एवं नास्ति यन्न भाषतेऽसत्यं कश्चित्। शास्त्रैरपि मृषावसरो दत्तः। यथा—

न नर्मयुक्तं वचनं हिनस्ति
न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे
पंचानृतान्याहुरपातकानि।।४८

परन्तु प्रतिज्ञातकार्ये स्वीकृतपूरितावधिकृत्ये प्राप्तेप्सितवित्तैर्मृषामात्रसहायकै–र्न भाव्यम्। यदि व्यस्तता चेन्नाङ्गीकरणीयमन्यथा व्यस्तोऽहमिति प्रजल्पनेन न किमपि हस्ते आयाति वायुरिव, अवमानतामेव व्रजति स जनः। अतः सर्वदासत्यं सर्वस्मिन् यस्मिन् कस्मिन् साधारणेऽपि कर्मणि नैव योज्यमेकासत्यगोपनेऽनेकासत्यभाषणा–विष्करणादिति। बहुसुजनाध्युषितमपि नगरमुपवनं वानरैरिव, विकसितकमलदलसुसज्जिततडागं करिभिरिव, नदीपारगमन्तुकामहरिणवृन्दं मकरैरिव, तोयवर्षण–तत्परसघनघनं झांझावातैरिव कैश्चिद् सज्जनेतरव्यवहारशीलैर्दम्भिजनैर्दूष्यते। असौ हि कश्चिन्नागरः प्राप्तपदान्धोऽहमेव सर्वज्ञोऽस्मीति स्ववाक्यैरहर्निशं ध्वनयति। स्वाधिकारिभयकम्पित–तनुर्दोलायमानकुक्कुरपुच्छ इव सिंहायमानोऽन्यजनसमक्षमिति दृष्टिपथमायाति न त्वया सर्वत्र? स्वार्थोपलब्धये प्रयत्नरतो न समाजाय, न देशाय, न सभ्यतासंस्कृतिपरिरक्षण ााय वाचरति,नैव निजकर्तव्यपालनमेव कुरुते। नैते सम्मानीया व्याघ्रचर्मधारिशृगाला इव बोध्याः। स्वावासे मर्यादापुरुषोत्तमश्रीरामचन्दस्य भगवतश्श्रीकृष्णस्य पूज्यस्य वा चित्राणि प्रतिमा वा भित्तावासने कृत्वा स्वयमेवर्चयन्तो वंचयन्ति सर्वानपि स्वसुखाभिलषिणो नदीतीरवर्तिवृक्षवासिवानरमित्रमिव। इमे वृद्धनखा इव, लम्बकेशश्मश्रुजालमिव कर्तयित्वा हेयाः। एवंविधा सम्मानभाजोऽपि धर्मनगरीं कर्मपुरीं वाश्रित्य मानक्रोधपरायणा दम्भगर्वाश्रया नगरवासिनोऽस्माभिर्विषधरसर्पा इव दूरत एव प्रणम्याः। केषांचिदेशामात्मप्रशंसाश्रवणकुलानां कृत्रिमजीवनादर्शानां विस्मृतनिजातीतानां यथार्थोक्तिश्रवण–व्यथितमानसानां व्यवहाराडम्बराणां 'मुखे रामः करे कृपाण' इतिशीलवतां कारणादेव रुचिरमपि नगरं सज्जनैः कंटकाकीर्णस्थलमिवावस्तव्यमिति मन्यते। अन्ये केचन एवंविधाअपि सखे! ये हि नीचबुद्धय आत्मीयानपि परिचेतुमसमर्था भवन्ति, पृच्छन्ति च कदा भवामनमिलन्माम्? स्वयं सर्वज्ञतां दर्शयन्यतः समक्षमुपासीनं मूढमिति भावयन्तो महाविद्वांसममात्मनानात्मानं मन्यमाना जल्पन्तीमे। अन्ये तु सर्वज्ञाः केचन निन्दन्ति महाकवीन् सहृदयजनान्, बहूनां मूर्धन्यमहाकवीनां ग्रन्थादौ विनयप्रसङ्गे मतिमन्दताप्रकटनरूपकथनमप्यभिमानमेवाङ्गीकुर्वन्ति। एतादशा अनेकेऽजानानास्तत्त्वं तत्तवत उपदिशन्ति हन्त! असूयन्ति समकक्षिणो विकासं दृष्ट्वा मार्जारा इव, ईर्ष्यन्ति समुदीयमानमतिमतोऽनुजान् विभाव्य मर्कटा इव, दोषानाविर्भावयन्ति समुपलब्ध–गुणेष्वपि सूकरा इव, कदाचिदयममतिशयीतेति भिया विपरीतमार्गमुपदिशन्ति, समर्थेऽपि न तत्सहयोगं कुर्वते, हन्त! न सघनतिमिरो मिहिरोदयमवरोद्धुं सक्षमः। तान् प्रति साभिमानं ब्रवीमि–

न बीजं धरित्रीं भिनत्ति तदेतत्
सुयोगं परेषां सदा चेहते यत्।
यदा दारयत्येव शक्त्या कठोरां
धरां वृक्षरूपत्वमाविष्करोति।।४९

सत्यमाह महाकविर्भवभूति: 'उत्पत्स्यते च मम कोऽपि समानधर्मा:' इति। न हस्तिमारुढो हस्तीव भवति, गुणा: पूजास्थानं गुणिषु न च लिङ्गं न च वय इतिस्थाने पदमिति योज्यम्।

लभ्यन्ते तरवो वनेषु बहवस्तेषां विशालो वट:
शाखा यस्य सहस्रश: खलु खगा: कृत्वाश्रयं शेरते।
काष्ठं दाह्यत एव गन्धरहित।।भीलाङ्गनाभिस्सखे
लब्ध्वा चन्दनमेव देववनिता नन्दन्त्यहो नो वटम्।।५०

वयस्य! यदि नगरे वासस्तदा प्रथममिमे नमस्करणीया 'दुर्जनं प्रथमं वन्दे 'इति वचनात्। नदीस्थो मकरेण वैरायते किम् ? दुष्टस्मरणान्महान् पापीयान् जातोऽहं तत: तीर्थवर्णनमारभे।

तृतीयो निश्श्वासः

# तीर्थवर्णनम्

शान्तिं वितन्य हृदये व्यथिते प्रतप्ते
चित्ते ह्यलौकिकसुखानुभवं ददानम्।
तीर्थं च साधुजनदर्शनजन्यबोधात्
वैराग्यरागमधुरं हरतीव नो कं ।।१

यत्रत्यभिक्षुकदलं किल शिक्षमाणं
वित्ते न तृप्यति जनोऽखिलजीवनेऽपि।
तत्रत्यसज्जनमतं मनुजं प्रभावि
त्यागं प्रबोधयति तीर्थगतं न कञ्चित्।।२

तत्रत्यवासिजनतानववेशभूषा—
भाषादिबोधनमहो परिवर्धकं तत्।
भौगोलिकं नवलदृश्यमिहागतं कं
हृत्वा तनोति सहसा नवजीवनाशाम्।।३

सखे! भासु अशेषलोकप्रकाशनक्रियासु रतं निरतं समर्पितवैभवमिति भारतमस्मद्देशो देवानां भगवच्चरणपुण्डरीकप्रचुरपरागपूरितपावनभूमिभागो निजास्तिक्यभावनां पुत्रः पितरम्प्रतीव पालयन् सकलजगदुत्पत्तिस्थितिलयकर्मकारणात्मिकां प्रकृतिं महीयसीमातरं प्रतीव श्रद्धां दधानः सांख्य इव प्रकृतिपरायणोऽसंख्यपवित्रतीर्थस्थलहृदयो दृश्यते। सर्वधर्मावलम्बी किन्तु सनातनधर्ममार्गगामी निहिताखिलतीर्थविग्रहो देवानपि स्वभूमौ जन्मग्रहाय निवासाय च चन्द्रबिम्बाननारमणीव यूनमाकर्षति। अयोध्यामथुरावृन्दावनहरिद्वार प्रयागवाराणसीप्रभृतितीर्थभूमयो नूनं कल्मषभरितहृदय—मपि जनं विगतकल्मषं फेनिलं पटमिवाक्षाल्य विदधतीति नातिचित्रम्।

अये! कुम्भमहाकुम्भद्वादशज्योतिर्लिङ्गगणनाशून्यजगदम्बामन्दिरसिद्धपीठानि समस्तमपि भारतीयं मानवं पावयन्तीति शास्त्रोक्तिः, परन्तु पाश्चात्यसभ्यताङ्गीकरणा—दश्रद्धालवो गुरुशास्त्रमतोल्लंघिनोऽभक्ष्याशनदुष्टमतय इदं ब्राह्मणानां पण्डितानां व मायाजालमस्तीति समुद्घोष्य स्वार्थं साधयन्ति, प्रोच्यते तेन न काशीगमनेन नवायोध्यादर्शनेन पापप्रक्षालनसम्भवः, तत्तद्दर्शनस्पर्शनवतामपि क्रौर्यकुत्सितकर्मकारित्वसाक्षात्करणात्, तद्वासिनां च बहूनामपि निन्दितकृत्यसंलग्नत्वादिति। नानुमतवचनोऽमेतस्य वयस्य! यावत्कालं तीर्थाटनं तावत्कालिकनिन्दितकर्मकारित्वानुपलब्धेः, किञ्च महान् नीचोऽपि तीर्थगतो बिभेति दुष्टकृत्यादिति को न जानाति। यदि प्रतिवर्षं क्रूरा अपि दिवसद्वयं पक्षैकं मासैकं यावत् जहति चौर्यक्रौर्यलुण्ठनापहरणबलात्कारमयानि कृत्यानि तेनापि शान्तिस्तावत्कालिकी कथन्न श्रूयते' गतः स जाल्मः' इति। धन्यमस्मद्पूर्वजा यैरित्थं चिन्तितम्। श्रूयन्तां लाभास्तीर्थगमनेन सखे!

प्रथमः सूर्योदय इव सद्विचारोदयः, अमावस्याप्रभावचन्द्रक्षय इव पापक्षयः, तीर्थाश्रितभिक्षुकविधवा—पंगुजनदशादर्शनजो गृहधनसन्ततितो वैराग्यवृद्धिः शुक्लपक्षीयचन्द्रवृद्धिरिव।

द्वितीयो बहुजनप्रदेशदेशजनसङ्गमेन तत्तद्वेशभूषाभाषणादिपरिज्ञानम्।

तृतीयस्तीर्थस्थले धार्मिकप्रवचनश्रवणसम्पर्कजनितामन्दानन्दावाप्तिः, कदाचित् सौभाग्यात् सद्वैराग्योत्पत्तिरपि।

चतुर्थः क्वचित् क्वचित्तु तीर्थस्थानशुद्धौषधमयवातावरणप्रभावेण भयानकदुस्साध्यरोगोन्मूलनीकरणमपि।

पंचमो निम्नोन्नततीर्थभूमिभागज्ञानेन भौगोलिकपरिज्ञानसंवृद्धिः, पूर्वश्रुतविस्मयावह—तीर्थस्थान—निदर्शनेन तत्कुतूहलपरिशमनं च।

षष्टस्तीर्थस्थानस्थापितमन्दिरप्रासादवास्तुकलादर्शनंतत्रत्यमैतिहासिकवृत्ताभिज्ञानं च।

सप्तमस्तीर्थस्थलानि बहूनि पर्वतशृंखलाश्रितानि नदीतटवर्तीनि च यानि कष्टप्राप्यानि, तत्र तत्र यात्रोत्सवश्रमार्जितशरीरस्थूलतालस्यत्यागः, अत्युतुंगसोपानमार्गावरोहणेन विवृतमुखमार्गेण वायुशुद्धिः, शरीरसर्वसन्धिग्रन्थिस्पन्दो येनानासेन व्यायामलाभः, अहमहमिकया दर्शनौत्सुक्येन परस्परं शक्तिसंधुक्षणम्, निजाभीप्सितार्थयाचनं तीर्थाश्रितदेवेभ्यः, गतिस्थित्यासनव्यवहारज्ञानं चेति तीर्थस्थानगमनेन वर्धन्त एवेति नात्र सन्देहावसरः। परन्तु हन्त! एतादृशं तीर्थस्थलमपि तीर्थकाकैरिव दुष्टपुरुषैः कतिपयैर्दूष्यमाणमस्ति। नातिदूरं गच्छामि; इयं वाराणसी नगरी एवावलोक्यताम्।

भगवद्विश्वेश्वराधिष्ठितवाराणसीनगरी काशीपुरीति नाम्नाभिधीयते श्रद्धालुजनैः। यस्याः पादारविन्दं प्रक्षालयति स्वोच्छलत्तरंगनिकरैः पुरोहितमसीमश्रद्धावनतानना पुनीतहृदया वधूरिव सादरमधिकतरम्। अनादिकालत एवैषाद्भुतनगरी व्यतीतबहुकल्पापि प्रौढयौवना, साध्वसाधुजन—सेव्यमानापि निर्मला, रागिविरागिजनैजुष्यमाणापि स्वतन्त्रा, अनेकाक्रमणकारिभिः पददलितापि विश्वजनसन्मानिता, कुजनप्रक्षिप्तावकरसमूह प्रदूषितगङ्गापि बमबमेतिशिवप्रसन्नकारिशब्दैः पवित्रितदृश्यविग्रहा निखिलदेवाश्रयस्वर्भूरिव शिवविष्णुहनुमदादिगेहा काव्यकोविदानां मनीषिणां विदुषां समधिगताखिल शास्त्रोपनिषत्सारविचाराणां शरणस्थली वैराग्यप्रदीपप्रकाशप्रकाशितान्तःकरणानां तपस्स्थली ज्ञानविज्ञानागारा वेददेवज्ञभूषिता गुरुकुलीनबटुकगीयमानानवरतमन्त्रपाठ—ध्वनिरम्या नाकर्षतीव कमपि जनमिहागतं श्रुतात्रत्यवृत्तजनं वेति प्रतिगृहदेवालया धर्मनगरी काशी पतिव्रता नारीव लोकशङ्करं शङ्करं सेवमानात्मानं धन्यां मनुते।

काश्यामेकत्र पतितपावनी भगवती भागीरथी भक्तानां मनोमालिन्यमपाकृष्य स्वजलस्पर्शमज्जनैः शिवदर्शनयोग्यान् विधाय स्वयं शिवाभिषेकसलिलपात्रे उपस्थाय तद्धस्ताङ्गुलिपुटेनानीयमाना प्रतिपलं नववधूरिव पतिजनवीक्षणाकुला भगवच्छरीरश्लिष्टा सौभाग्यवती सती वारं वारमेव कर्तुं प्रयतते। हन्त! धन्यं मणिकर्णिकाघट्टं यत्र प्रतिक्षणं मृतानां दाह्यन्ते देहा तृणानीव, ततो भस्मसाच्छरीरांशाः प्रवाह्यन्ते गङ्गायां येन संसारागमनचक्रान्मुक्तो जीवो न पुनरायाति मुक्तपंजरात् निर्गतो विहग इव। अत्रैव वासो भगवतश्शिवस्येति बहूनां वचनम्। मणिकर्णिकाघट्टे स्नातो जीवन्नेव कदाचिन्मुक्तो जायत इति शास्त्रोक्तिरपि।

अपरत्र दशाश्वमेधघट्टं यद्धि गङ्गादर्शनसमुत्सुकानां विद्युदिव झटिति नाकर्षति। अनेकहस्तशिल्पवस्तुभि: सज्जितो दशाश्वमेधघट्टगमनमार्गो भिक्षावृत्तिचरैर्दीयतां दीयतामिति—कोलाहलीकृत: सहस्राधिकश्रद्धालुजनचरणव्यस्तसोपान: सुस्वागतायाभ्यागतानां सदैव तत्परो दृश्यते सद्गृहस्थ इव। अत्र हि विचित्राकृति—साधवस्तेषु कश्चिज्जटाभिस्तापसो जटाजूटशरीर:, कश्चिद् भस्मावगुण्ठितसमग्रदेह:, कश्चित्कौपीनावशेषो महति शीतेऽप्युत्युग्र तपोलीनतया कृशतनुरस्थिमात्रं वहन् देहानुरागं त्यजन् विश्वेश्वरमन्वेषयन्निराहार:, कश्चिच्चन्दनरसाप्लावितललाटदेश:, अपर: प्रभूतविजयाभक्षणमत्तशरीर:, अन्यो धूमवर्तिकापानमुखो रक्तनयनो विकरालाकार: यं विलोक्य जना: परिवर्तिताध्वानो भीता इव गङ्गास्नानफलं लभन्ते, अन्य: कश्चिदकृत्रिमव्यालमाल: परिभ्रमन् घट्टं शिवघट्टमिति सूचयति। कश्चिद् भीमकायो विकृतवदनो भैरव इव परिचरन् घट्टभूमिमभिरक्षतीव। अत्र हि संस्कृताक्षरशून्या बहवो वेणुशिखा आरचितचन्दनभाला: भस्मत्रिपुण्ड्रधारिणस्ताम्बूलरस—फुल्लितमुखा 'पण्डिता 'आगच्छागच्छेति' वदन्तो गङ्गाभिषेकोत्तीर्णान् बलाद्धस्ते जलाक्षतपुष्पाणि प्रक्षिप्य बहुद्रव्यमयं संकल्पं कारयन्ति त्वरितमेव। हन्त! संकल्पभयनिर्जितो जनश्चिन्तितस्सन् गृहगमनमार्गव्ययं समर्प्य येन येन भारतीयारक्षिधृतापराधिनमिवात्मानं मोचयन्ति। कैश्चित्तु सहृदयैर्भाटकं दीयतइत्यपि दृष्टम्। अहह! वैदेशिकांस्तु इक्षुदण्डमिव चोषयितुमीहन्ते शठा वंचकाश्च काश्या:। सत्येयमुक्ति: काशीविषयिणी' काशी वंचकानां पुरीति। वयस्य! दर्शनीयमिदं घट्टं सन्ध्याकलीनारार्तिक्यसमये। धावन्त्यो नावो गङ्गासलिले,विचरन्तो भक्ता घट्टे पर्यटन्तो वैदेशिका, मनोहारिण्य: सुन्दर्य:, पीताम्बरा: श्वेताम्बरा: समानवयोरूपाकारशीला बहुकालपर्यन्त—मन्त्रस्तुतिगायका:, कदाचिदध: कदाचिदूर्ध्वम्, कदाचिद् दक्षिणं वामं च सहैव साभिनयं बहुवर्तिकादीपकैरारार्तिक्यमग्ना विस्मयं तन्वते। गङ्गारतिदत्तमनस: समय: कदा निर्गत इति न ज्ञायते। मनोहारि रूपमिदं यो न पश्यति स नूनमेव सचुरचक्षुरिवेति मन्तव्य:। कालेऽस्मिन् प्रतिभाति नभोऽङ्गणं देव गन्धर्वयक्षसङ्कीर्णं तारकरूपेण शुक्लपक्षे, कृष्णपक्षे तु गङ्गारतिदीपकप्रभापराजित लज्जितावनतकान्ति हीनचन्द्रस्योपस्थित्यापि घट्टमेतत्सूर्योदयभूमिरिवावभासते।

अये तत आयाति लोक: स्वर्णमन्दिरस्थं भगवन्तं विश्वनाथं द्रष्टुम्। गृहीतगङ्गाजलबिल्वपत्रचन्दनरसपुष्पकरा दर्शनार्थिन:महादेवजयघोषवन्तस्तदीयं स्थलं गुंजयन्त: स्वजीवनं कृतार्थं मन्यमाना वीथिमार्गेण रमणीयपण्यदर्शनलग्ना 'नम: शिवाय' इति हृदयेन वचसा वा जपन्तो मन्दिरद्वारमागत्य क्रमश: प्रविश्य भगवते समर्प्य पूजनसामग्रीं स्पृष्ट्वा च शिवलिङ्गं प्रमुदितमनसो द्विगुणितं महादेवरवमुच्चार्य घण्टां

वादयन्तो भित्तिं स्पृशन्तो निवर्तन्ते दर्शनात्। हन्त! अत्रापि नीचस्वभावो लुण्ठको न विमुञ्चति निजवृत्तिं। कश्चिन्महिलस्वर्णहारदत्त–दृष्टिस्तमपहरति, महति सम्मर्दे कश्चित् कर्णाभूषणं कर्षति। अतोऽपहारिताभूषणा निन्दन्ति काशी–मिति दौर्भाग्यं काश्याः, किञ्च शिवोऽपि 'तस्कराणामधिपति'रिति वचनात् कदाचिदिमे वाक्यमेतत्सार्थक्यं नयन्तीति।

सखे! मन्दिरान्निर्गतो ज्ञानवापीपरिसरस्थः को नावसीदति जनो, यत्राक्रान्तयवनशासकेन केनचिच्छिवमन्दिरवलभिं भित्वा तत्र तत्र च स्वेष्टचिह्नानि कारयित्वा स्वकीयमिदमित्युद्घोषितम्। इदं दर्शं दर्शं भवति न कस्य रुधिरमुष्णम्? त्यज्यतामयं विवादास्पदो विषयो यो हि विचार्यमाण एवाग्निस्फुलिङ्गानीव प्रज्वालयति शरीरम्।

हन्त!काश्यां संस्कृतविषये मौनिषु विद्वत्सु अस्मद्गुरव एव संस्कृतप्रचारप्रमुखाः। श्रूयताम्–

वदन्तु विश्रुता भव्या मौनिनश्च मनीषिणः।
संस्कृतं भारते भूयात् राष्ट्रभाषा नवा न वा।।४

सत्यमुक्तं न वाक्यं किं यदुक्तं केनचित्क्वचित्।
संस्कृतज्ञाः भवन्त्येव पण्डिता अलसाः सखे!।।५

इतो नातिदूरं प्रातस्स्मरणीयारविन्दचरणरजसां सभ्यतासंस्कृतिरक्षकाणां संस्कृतसमुद्धारार्थ–समर्पितचित्तानां सीमितसहायकानां सनातनधर्मक्षणैकव्रतिनां लोभरहितानामत्यल्पोपकरणवतां स्वनामधन्यानामन्वर्थाभिधानामस्मद्वासुदेवद्विवेदिशास्त्रिणां 'सार्वभौमसंस्कृतप्रचारसंस्थानं' विलसति। यद्धि अणुपरिमाणमपि सम्पूर्णधरित्रीव्यापकम्,संकुचितावाससमुपेतमपि महदायतम्। अनेकदेशदेशान्तरवास्तव्य शिष्यसंस्कृत–ध्वनिध्वनितं वेदोपनिषदारण्यकपुराणकाव्यादिग्रन्थालयम्, यत्र वासुदेव संचाल्यमानभारतरथ इव वासुदेवारूढसंस्कृतरथो न क्षुण्णाद् विचलितः। अस्माकं देशस्य स्वाधीनतादिवस एवास्य संस्थापितमिदं संस्थानं विजयं प्राप्य प्रयोजनपराकाष्ठामधिगम्य स्वर्याते गुरौ न तथाविधं संस्कृतं सेवते यथा गुरुभिराकांक्षितम्। असौ हि संस्कृत–प्रचारैकरसेप्सुरपि सर्वरसस्वादकुशलः, कृशशरीरोऽपि संस्कृतोन्नतये कनकभूधराकारमहावीरः, बहुभाषाज्ञोऽपि मितभाषी, मुक्तकोषागारहस्तोऽपि गृहीतावश्यकवित्तमात्रापरकौत्सः, अकृष्णोऽपि शिष्याद्वय कृष्णकान्तोपेतः, अरागोऽपि कमलारागान्वितः, मृषाविद्यानन्दितोऽपि लब्धविद्यानन्दः, भारतीनिवासस्थलोऽपि श्रीनिवासाश्रयः, परिहृतसुरेन्द्रमोहनोऽपि समाकृष्टसुरेन्द्रमोहनः,

कण्वप्रियम्वदादूरोऽपि कृतप्रियंवदादूरः, अर्जुनार्चितवासुदेव इवार्जुनार्चितवासुदेवः, स्वाद्भुतगुणसान्तोऽपि मधुरगुणजितानन्तः, ससम्माननीयमानलघुशरीरोऽपि शैलेशगुणार्चितः, सर्वमासेष्वपि निजचरणी–कृतशरदिन्दुः, अनभिलषितमदनारविन्दोऽपि गृहीतमुग्धारविन्दसेवः, कृष्णकान्तसहायोऽपि राधाकान्तवल्लभः, रुक्मिणीपतिरिव रुक्मिणीपतिः, कपिलाभिन्नवासुदेवोऽपि कपिलाभिन्नवासुदेवः, प्रसहनविदग्धः अपिनोपहासकः, बहुसमादृतसुजनसभाजितोऽपि नान्यमतखण्डनाभिलाषः, चतुरचित्रसेनोऽपि न धीरोद्धतः, वागीशकृतासकृच्चरणस्पर्शोऽपि निरभिमानमानसः, सरस्वतीमात्रैकोपासकोऽपि उमेशप्रियः,शशिकान्ताननोऽपि विनतीकृतप्रभाकरः, मुष्टीकृतधनञ्जयोऽपि अनिलापरपाणिः, अशेषदेवांशसम्पन्नापरवासुदेवः परमहंसमित्रः, चतुर्वेदप्रियोऽपि द्विवेदो न कस्य श्रद्धेयः काश्यामस्मद्गुरुरसौ।

प्रचारयति संस्कृतं तस्मिन् मूर्खेषु कोलाहलः, अलसविद्वच्छिरोमणिषु कम्पनम्, अभद्रेषु वाग्भयम्, पण्डितम्मन्येषु मानहानिः, अकविषु प्रलापः, पूजकपुरोहितेष्वमर्षः, संस्कृतभक्षेषु कोपः, कतिपयसंस्कृताध्यापकेषु गर्वावेगः, असाधुवृत्तिषु स्वेदोद्गमः, दैवीवाक्कठिनेतिवदतां नाशः, न संस्कृतानुरागिणामासीत्। किञ्च गीर्वाणभाषासमुपासकेषु प्रहर्षः , सुजनेषु अमन्दानन्दः, मुनिषु शास्त्रलोपाशङ्कालोपः, तत्कालीनसंस्कृत पाठकालस्यदर्शनखिन्नेषु समुल्लासः, बुद्धिमत्सु रागोदयः, पादपेषु प्ररोहः, पुष्पेषु विकासः,सद्गुरुषु संस्कृतसूर्योदयोद्गमः, सुरभारतीबोधोत्सुकेषु संख्यावृद्धिः, मठमन्दिरेषु शुद्धस्तुतिमन्त्रस्वरोच्चारणोदयः, सच्छिष्येषु शास्त्रपरिशीलनौत्सुक्याविर्भावः, न संस्कृतेतरदुष्टप्रवृतीनां तन्नाशाभिलाषवतामदृश्यत।

असौ हि गुरुर्विनीतः सहृदयानाम्, दयालुर्दरिद्राणाम्, सरलातिसरलसंस्कृतसम्भाषी महतां विदुषामपि समक्षम्, उदारः शिष्याणाम्, आशुकविः काव्यपीयूषपानकुशलानाम्, सङ्गोष्ठीप्रियो बालमहिलाजनानां विपश्चिताम्, रसिकः संस्कृतगीतानाम्, रचयिता सरल मधुरहृदयग्राहिकाव्यानाम्, याचको धनपुस्तकानाम्, कोषो वेदशास्त्राणाम्, प्रभावयिता सभासदः, आग्रही सुरभारतीसंरक्षणस्य, अनिच्छुरलंकाराणाम्, समुचितव्यवहारज्ञो दृष्टमात्रेण जनानाम्, यथाकालं प्रहासयिता विदुषः शिष्यान् प्रहसनैः, सदा स्मयमानास्यो वार्तालापावसरे सर्वदा शयानोऽपि जागरित एव दृष्टो मयेति नात्रातिशयोक्तिः।

अहो दर्शनीयवपुर्विकसितकमलनयनोऽनल्पोन्नतघोणः, ह्रस्वश्वेतकुन्तल कलापशिरोदेशः, सुन्दरललाटः, चन्द्रद्युतिमन्मुखः, रक्तिमकपोलः, धवलधौतकंचुकप्रियः, कृष्णपिशङ्गपादत्राणः, कृष्णच्छत्रः, स्थूलोपनेत्रः,वार्धक्यात्

क्षीयमानतनुरपि युवकार्यकारित्वोपेतः, लघुदण्डपाणिः, अप्रयुक्तकंकतिकः, वटुकान्तेवासिभिः संवाह्यमानचरणो विश्रामकाले, संस्थाने काष्ठचरणपादुका धारी, व्यतीताशीतिसंवत्सरोऽपि लेखितुपठितुकामो दुःखितमना कदाचिल्लेखनावसरे कम्पमानपाणिः 'नाधुना करो मदीयो लेखने प्रसर्पति' इति भाषमाणोऽवलोकितः। अथ च विश्रम्य विश्रम्य तेनैव पाणिना कम्पमानेन सपोर्पसर्पणाकृतिरिवाक्षरं लिखितं विस्मयं तनोति। वयस्य! न विस्मरामि किमपि तत्रत्यं वृत्तम्। तत्र प्रातः सूर्योदयात्प्रागेव विहितस्नानाः शिवमन्दिरगर्भस्थलमुपासीना वयं श्रीमद्भगवद्गीताश्लोकं सस्वरं पठामः स्म, तदनन्तरं विविधवृत्ताबद्धपद्यानि प्रगाय भगवन्तं शिवमभिनम्य गुरुवरचरणस्पर्शं कृत्वाभिवाद्य च तदादिष्टा जल्पानमल्पमादाय स्वाध्यायाध्यवसायिनो गृहीतपुस्तकाः संस्कृताभ्यासमकुर्म। अस्मदीयं संस्थानं क्षीरनिधिरिवामूल्यरत्नप्रसूतेः, संस्कृतोद्यानमिव सांस्कृतिककार्यक्रमायोजनात्। सुरभारतीसज्जितसर इव संस्कृतवटुककमलविकासात्, कदाचित् यज्ञस्थलमिव वेदमन्त्रपाठात्, कदाचित् नाट्यस्थलमिव लघुनाटकाभिनयात्, कदाचिन्मन्दिरमिव स्तुतिगानगायनैः, कदाचिन्मन्त्रणाभूमिः संस्कृतोत्कर्षविषयिणी गोष्ठीनामायोजनदर्शनात्। हन्त! गतानि तानि दिनानि।

वन्दे गुरुवरम्—

वाणी सदैव रुचिरा गुणगानलीना
मग्नं मनश्च भवताद् भवतां सकाशम्।
कुर्यां गुरो शिरसि पादरजस्त्वदीय—
मित्थं हृदा मुहुरहं प्रणतो वदामि।।६

शब्दरूपं नमस्कारं शब्दरूपं च पानकम्।
शब्दरूपात्मकं धूपं दीपं नैवेद्यमेव च।।७
शब्दरूपं सुमं प्रीत्या दक्षिणां शब्दरूपिणीम्।
अरविन्दः समर्प्याहं प्रसीदामि निरन्तरम्।।८

न कश्चिज्जीवति मर्त्यलोके जातः, गतवयाः संस्कृतमिहिरोऽस्तं यातः, लोकान्तरेऽधिष्ठितो गुरुवरो मे सर्वं पश्यति, यत्कः शिष्यो मदीयः संस्कृताय किं कुर्वन्नस्तीति? अभ्यर्चनीयपादपङ्जोऽस्मदीयो गुरुरवसीदतीदमवलोक्य यत्स्वार्थोपजीविनो न यतन्ते संस्कृताय। हीयतामियं यथार्थवार्ता, काणोऽन्धो वा काणोऽन्ध इति कथनेन कुपितो भवत

एव। कृतऽनैर्गतत्रपैरस्माभिर्न वार्षिकं संस्कृतसम्मेलनमपि गुरुमतानुसारमायोज्यते। न चणकैको भिन्नति भाण्डमिति जानाति लोकः। अतोऽमहस्मि तूष्णीम्। किञ्च श्रूयतामिदं तावत् काव्यं गुरुविषयकं वैद्यनाथनगरं गतेन मया शिवमन्दिरमुपविष्टेन रचितम्।

श्रीवैद्यनाथस्तुतयः—

यस्य प्रभा तिमिरपुञ्जविनाशिकैषा
पुण्यप्रदा भयहरी सुखशान्तिदैषा।
राज्ये नवे विदितवैभवझारखण्डे
श्रीवैद्यनाथभगवान् मम रक्षकोऽस्तु।।९

काश्यां शिवो वृषभनायकपृष्ठसंस्थः
पापादिजातभवतापविनाशदक्षः।
श्रीविश्वनाथभगवान् स हि वैद्यनाथो
मद्दुःखशोकभयतापहरो हरोऽस्तु।।१०

दुःखानि दुर्बलकराणि भयानकानि
यानीन्द्रिद्विविधनाशनतत्पराणि।
लोकस्थवैद्यबलबुद्धिहराणि यानि
श्रीवैद्यानाथनिलयेऽनिलयानि सन्तु।।११

सत्प्रार्थनां करुणवाक्यसुगुम्फितां तां
श्रुत्वागतः सुखमथो हरवैद्यनाथः।
पार्श्वस्थितामकथयत् स शिवः शिवां हे
देवि शृणु शृणु वचः शृणु संस्कृतस्य।।१२

श्रीवैद्यनाथ उवाच—

हे संस्कृतिन् तव मया सकलानि तानि
पद्यानि दु:खहननातुरसक्षमाणि।
श्रद्धाप्रगीतनवनीतसमानि सद्यो
न्यस्तानि तानि सुशिरोंऽशविशिष्टभागे।।१३

श्रीपार्वत्युवाच—

आकर्णयाामि वचनं शुभसंस्कृतस्य
हे वैद्यानाथभगवन् मम नाथ नाथ।
यत्रागतिर्मम भवद्विवषज्जनानां
हिन्दीति लोकमनुजा: प्रवदन्ति सा का।।१४

श्रीवैद्यनाथ उवाच—

देवि त्वया विदितभारतपुण्यभूमौ
भाषासु शोभनतमामपहाय दैवीम्।
अन्याश्च देशतनया: प्रवदन्ति भाषा:
श्रुत्वा यतो मम मन: सुखमेति नेति।।१५

स्यात्संस्कृतं सकलमानवमूलभाषा
सैषा मदीयनवभारतभूमिनासा।
तेभ्योऽस्मदीयसुफला भवतात्सदाशा:
यै: संस्कृताय च भवन्ति शुभप्रयासा:।।१६
बाल! त्वदीयगुरुणा परितस्स्वदेशं
श्रीवासुदेवसुधिया प्रसृतं शुभं यत्।
तत्संस्कृतं सुजनमानससौख्यरत्नं
प्रत्नं नवीनसदृशं हरतीव चेत:।।१७

अद्यापि यो विविधबालकशिक्षणेऽग्रो—
मांसास्थिजीर्णतनुकः प्रगतो वयोभिः।
किं संस्कृतस्य भवितात्र मृते मयीत्थं
नित्यं विचिन्त्य स नरो लभतेऽसुखानि।।१८

श्रीपार्वत्युवाच—
व्यर्थास्तदीयविपुलाः प्रभवन्ति चिन्ताः
शिष्या हि यस्य बहवो विबुधा महान्तः।
विद्याकलाविनयवैभवशीलवन्तः
किं संस्कृतं भुवि सदा न विबोधयन्ति। १९

श्रीवैद्यनाथ उवाच—
मन्ये तवेह जगदीश्वररि वाक्यमेतत्
सत्यं मुखात्सुखकरं निसृतं वचोऽस्ति।
दातुं सुतौ च समवाप्य सुरेन्द्रतुल्यौ
भीतोऽभवदशरथः स कथं मुनिभ्याम्।।२०

एषोऽमरः स हि नरश्चतुराग्रगण्यो
विद्याप्रदाननिरतो विरतो हि लोभात्।
स्नेहार्द्रचित्तमृदुभावभरेण वाचा
शिष्यं स्वपुत्रसदृशं कुरुते सुविज्ञम्।।२१

देवि साम्प्रतं लोके तु—
एको जनोऽपि स न यः सरलार्द्रचित्तः

सर्वः कटुप्रवचनः परधान्यनिष्ठः।
अज्ञः कुवृत्तिपरिपालनसन्निविष्टः
दुष्टश्च शिष्टजनदूषणकार्यलिप्तः।।२२

परन्तु—
वित्तं ददाति विपुलं नवकंचुकानि
ग्रन्थान् प्रदाय विविधानि च पुस्तकानि।
भुक्तं कथन्न दिवसे मम शिष्यकेण
एतद्विचारयति पृच्छति कारणं किम्।।२३

जानाति शिष्यमनसः सकलान् हि भावान्
शक्नोति किन्तु वदितुं न हि कष्टदानि।
वाक्यानि सौख्यभरितरानि वदन् जनोऽयं
शिष्याय नूनमतुलं कुरुते शिवं च।।२४

शेते दिवा न लभते निशि नो सुनिद्रां
जानाति विज्ञजनमौलिविशिष्टचन्द्रः।
स्वीयप्रसादनविषादनरूपयात्र—
मद्यापि यो लिखति काव्यमिदं नवीनम्।।२५
माता पिता च विबुधौ भवतः तदीयौ
भ्राता स्वसा हितगणोऽरिगणश्च पत्नी
धन्या इमे मम मतौ शृणु देवि देवि
श्रीवासुदेव इव सैष हि वासुदेवः।।२६

एष स्पृहारहितमानवपूज्यमान्यो
देवोपमो बहुभिरेष मदीयहृत्स्थः।
भूयात्पुनः नववया नवजीवनाय
मत्संस्कृतस्य च कृते मुनिवासुदेवः।।२७

शुक्रार्कचन्द्रबुधदेवगुरुप्रकेतु–
राहुप्रबुद्धशनिमङ्गलसम्प्रसादात्।
श्रीविष्णुधातृकृपया च ममाशिषेह
जीयाच्चिरं हि शरदो मुनिवासुदेवः।।२८

सौभाग्यमिदं गुरुवरजन्मदिने तेषामुपस्थितौ पठितमिति ज्ञात्वा मुदमनुभवामि।

सखे! प्रोक्तमिदं शिष्यत्वभावान्मयात्र; अन्तरयामि विषयमधुना काश्यां सर्वेऽपि देवा प्रस्तररूपमाविष्कृत्य यत्र तत्र निवसन्तो विभिन्ननामभिर्ज्ञायन्त इति। काश्या वैशिष्ट्यमेव प्रकाशयति। पिशाचमोचनाख्यो हि देवोऽद्वितीयोऽदेहवतां देहवतो भयान्मोचयति। दुर्गाकुण्डीयमातृमन्दिरं सर्वाभीप्सितार्थप्रदायकम्, यत्र जनौघः प्रतिदिनं महानेव दृश्यते। तत्समीपमेव श्रीसत्यनारायणमन्दिरं यत्र समग्रमपि तुलसीकृतरामचरितमानसमुल्लिखितं विद्यते भित्तिषु। मूर्तयश्चाभिरूपाः हरन्तीव पापानि दर्शनमात्रेण। इतोऽग्रे सङ्कटमोचनमन्दिरं यद्धि पवनसुतहनुमतोऽस्ति शनौ मङ्गले किंवा प्रतिदिनमपि चासङ्ख्या भक्ताः सश्रद्धं तुलसीपत्र–मोदकपुष्पमाल्यादिपाणयो जयजयेतिघोषेण सोत्साहं गर्जन्ति। हनुमत्कृपाविनष्टसङ्कटाः शतशो मुक्तकण्ठेन हनुमन्तं प्रणमन्ति सेवन्ते चेति पश्यति सर्वोऽपि लोकः। असकृदहमुपकृतः कृतजयरवः पठितहनुमच्चालीसः प्रगीतसुन्दरकाण्डश्च हनुमतः प्रीत्यर्थं यदा कदा हनुमद्बाहुकमपि पठित्वा लब्धाभिलाषोऽभवम्। सखे! अत्रैवातङ्कवादिभिर्निहता निरपराधिनो बहव इति संस्मृत्य संस्मृत्य रोमांचितो भवामि। दृष्टानि विस्फोटकैः खण्डितानि शरीराणि येषु कश्चित् छिन्नहस्ताङ्गुलिर्भिन्नोदरोऽपरोऽन्यो विनष्टपृष्ठभागः, कश्चित्तु पादविहीनः कश्चिच्चेतनाशून्यः, अनेके रुधिरस्नाताश्चिकित्सालयम् आनीताः, धन्यश्च छात्रवर्गो येन हि निवारितेऽपि प्रभूतरक्तदानमक्रियत। हृद्विदारकं दृश्यमदः स्फुरतीव समक्षमद्य

ुना, त्यजेदानीमग्रिमे निश्श्वासेऽभिधास्यामि समस्यावर्णने। वयस्य! श्रद्धेयः श्रीमालवीयमहोदयो, यदम्योत्साहसाहस—समर्पणवशादयं विश्वविद्यालयः शिक्षाकाशे सूर्य इव प्रकाशमानोऽस्ति।महामना इति सत्यं विशेषणमस्य मदन इव शक्तिमान्, मोहन इव सर्वजनाकर्षणतत्परो रक्षकः सनातनधर्मस्य, गोप्ता वेदादिशास्त्राणाम्, समर्थको वर्णाश्रमाणाम्, सम्मानयिता विपश्चिताम्, उन्मूलयिता व्याप्तदुर्गुणानाम्, प्रवाचको भागवतस्य, सत्यनिष्ठो हरिश्चन्द्र इव, याचकः कौत्स इव, आह्लादकश्चन्द्र इव, प्रकाशको मिहिर इव, अविकलदेहोऽपि भिक्षुकः, अक्रोधनो मुनिरिव, श्वेताश्वरथी वासुदेव इव, अलोभोऽपि धनभूमिवांछापूरितहृदयः,गृहस्थोऽपि वानप्रस्थः, निन्दनीययाचनाकर्मलीनोऽपि विकसितारविन्दाननो न स्वार्थायापितु लोकहितायेति को न जानात्यस्मद्भारतीयो यस्य कामनेयमासीत्—

नत्वहं कामये राज्यं न स्वर्गं नापुनर्भवम्।

कामये दुःखतप्तानां प्राणिनामार्तिनाशनम्।।२९

काशी कदाचिदासीद् विद्याराजधानीति प्रमाणीकुर्वता महामनसा सर्वविद्या राजधानी काशी कृतेति विचार्य चेतःकमलं विकसतीव। प्रकृतिक्रोडे संस्थापितोऽन्यतमः शिक्षादीक्षादृष्टेः, विशालतमो परिसरप्रसारतया, सुन्दरतमो रसालजम्बुप्रभृतिवृक्षवैभवात्, दर्शनीयो नवीनशिवालयसौन्दर्यात्, श्लाघ्यो विभिन्नसङ्कायच्छात्रावाससुव्यवस्थापनात्, प्रेक्षणीयो नाट्यप्रेक्षागृहसम्पन्नत्वात्, संजीवनीप्रदायक आयुर्वेदसङ्कायोपलब्धेः, आधुनि—कचिकित्सासमन्वितत्वाज्जीवनरक्षकः, भारतीयसंविधानाध्यापको विधिशिक्षणसंलग्नत्वात्, वेदोपनिषदारण्यकपुराणकाव्यदर्शनकलाविलसितो नवागन्तुकान् चकितीकरोति, आगन्तुकान् पुनरागमनाय विवशीकरोति, निवसतो विबुधीकरोति, दरिद्रान् धनिकीकुरुते। अहह! इतो दूरङ्गतोऽपि न विस्मरति मातरमिव, आत्मसम्बन्धं स्थापयति सम्बन्धीव, काशीस्मरणशीलो विस्मृतसर्वस्वः कुतश्चिदपि निमीलितलोचनस्तां प्रत्यक्षीकरोतीव। तीर्थस्मरणमात्रेण क्षीयन्ते पापराशयः इति प्रतिजानेऽहम्। वयस्य! काश्याः सङ्कीर्णा वीथ्यो गवेन्द्रसङ्कुलाः, जनोघव्याकुलाः, दर्शनार्थिसंक्षुभिता अपि सानन्दं गमनयोग्या मेलाभूमिरिव। क्वचित्ताम्बूलविपणयो यत्र पङ्क्तिबद्धाः प्रतीक्षन्ते स्वक्रमम्, गृहीत्वा च एलालवङ्गपूगीफलोपेतं ताम्बूलं मुखे कुर्वन्तः क्षणमात्रमेव तद्रसतरङ्गायितफुल्लितकपोला नासिकया सङ्केतेन चक्षुर्भ्यां हस्तेन वाकार्यं वक्तव्यं प्रकटीकुर्वते। नालिकास्तु काश्यास्ताम्बूलरसाप्लाविता काशी रागान्वितेति दर्शयन्यतीव। क्वचिन्मिष्टान्नविपणयो या दर्शनमात्रेण जिह्वामार्द्रीकुवन्ति, आमिक्षनिर्मितम्, अक्षोटक्षुद्रद्राक्षामयम्,

रसगोल्लकन्तु गच्छतोऽपि सुस्वादुतयामाह्वयन्त्येव। क्वचिन्मोदकविपणि:, क्वचित् समोसाविपणि:, क्वचित्तु कुण्डलिनीविपणि: यत्र शष्कुलिशाकमपि प्रेम्णास्वाद्यन्ते। हन्त! नाधुनास्वादितमन्यत्र, सर्वमपि भोज्यं काशिकं नान्यत्र सुलभं येन केन प्रकारेणापि। अस्या: काश्या एकमपरं वैशिष्ट्यं यद्भवात्काशीयं चकास्ति। अगणिता वेदशास्त्रादिपारङ्गता विद्वांसो निश्शुल्कं वटुकान् विद्यार्थिनो वा गृहागतानाहूयापि बहव: सस्नेहमध्यापयन्ति, नेदं क्वचिदपि वित्तोपजीविनां नगरे हस्तदीपेनान्वेषणे कृतेऽपि दृष्टिपथमायाति। मित्र! स्मरामि साहित्यशिरोमणीन् मृदुलस्वभावान् प्रसन्नवदनवायुनन्दनगुरुवरान्, प्रथितयशसां श्रीगुरुचरणानामधीतिनां पृष्ठेऽपि नाधिकमुपाविशम्। अन्यत्र च गतोऽहं साभिलाषं न्यायवैशेषिकत्तवविजिज्ञासुस्सन् तर्कालङ्कार—धुरन्धरश्रीवशिष्ठत्रिपाठिगुरुसकाशम्। अद्वितीया शिक्षणशैली, मेघगर्जनोपेता वाग्, पदपदार्थावबोधे कश्चिदपि तत्सम: काश्यमेव नापितु समग्रेऽपि भारत इति। परन्तु घटपटमठशब्दश्रवणसमुत्पन्न—शिरोवेदन: कतिचिदहान्येव दौर्भाग्यात् कार्याधिक्याद् भयाद्वा तलस्पर्शिज्ञानपरिज्ञानाच्चुतोऽभवम मधुना धुनाति हृदयम्। अस्मत्सहपाठी मतिमान् श्रीशैलेशकुमारो धन्यो यश्शब्दसमवाय सम्बन्धा च्छिन्नोऽपि न्यायवैशेषिकतत्त्वज्ञानावच्छिनहृदयोऽधिशेतेघ्स्मानिति। अनेनाहं ज्ञातो यद् मदनुपस्थित्या गुरुणा पृष्टं कथं नायाति ते सहपाठीति नाहं जानामि शैलेशेनोक्तेऽसौ गुरुणाहं भाद्रपदस्य भेक: कथित:। एतच्छुत्वा लज्जितोऽहमद्यापि तदीयचरणकमलपरागाभिलाषोऽस्मीति। सखे!

गीतापाठरव: प्रियो गुरुगृहे देवालये दर्शनं
गङ्गायाश्च तटे मुदा विहरणं तद्घण्टिकावादनम्।
ढक्काया ध्वननं शिवार्चनविधौ बंबंध्वनि: पावन:
किन्नेयं विकलीकरोति हृदयं काश्या: स्मृति: साम्प्रतम्।।३०

अहो! वक्तव्यन्त्वपरिमितं काशीविषये मनोदेशे मे, किन्तु न तत्सर्वं वच्मि, एतावान् दर्शितोऽनुराग: काशीं प्रति तथापि क्वचिदध्वरधूमप्रचयनिर्गम:, क्वचिन्मन्दिरघण्टा गर्जनम्, क्वचित्कौशेयकौपीनवतां दण्डिनां सम्मर्द:, क्वचिच्छिखातिलकवतां जनानां प्रवचनकथानन्दोत्व:, क्वचित् समसामयिक—विषयोपेतो विचारकाणां सङ्गोष्ठी, क्वचिद् विषयदार्ढ्याय शास्त्रारम्भ:, क्वचिन्नाट्योल्लास:, क्वचिद् भोजपुरीहास्यसम्मेलनस्या—मन्दानन्द:, क्वचित् कृष्णभक्तानां नर्तनभजनपूर्वकमटनम्, क्वचिद् वृहच्छमश्रुमतां साधूनां भ्रमणम्, क्वचिद् वृषारूढकाशिकजन:, क्वचिद् विजयाशर्करापिच्छिलदधिनिर्मितलस्सी

पानोत्कण्ठितानामहमहमिकया चापलम्, घट्टाश्रितानां युवयुवतीनामालपनम्, तटेषु श्रद्धालूनां गङ्गाम्भस्स्नानम्, कुपितकामिनीजनेन साकमापणभ्रमणम्, चायपानेछुकमित्रैस्सह लङ्कागमनम्, क्वचिद् वृषद्वयधावनचकितजनानामितस्ततः पलायनम्, प्रतिरविवासरं मालवीयभवने गीताप्रवचनश्रवणम्, प्रतिवर्ष होलोत्सवे श्लीलाश्लीलकाव्यनिर्झरिणी–प्रवाहो यत्र सम्मान्या अपि निलीयमानाः कस्मिंश्चित्कोणे रसं पिबन्तो दृष्टाः।

मित्रवर! गङ्गायमुनानदीसङ्गमे विद्यमानस्तीर्थराजः प्रयागस्तु स्मरणकाल एवाकर्षति स्मर्तारम्। पुरा ब्रह्मणः प्रकृष्टयागानुष्ठानादस्याभिधानं प्रयाग इति घोषितं स्यादिति वदन्ति विज्ञाः पुराविदश्च। कुम्भपर्वणि महाकुम्पर्वणि गङ्गास्नानावसरे चात्रासङ्ख्या धर्मानुरागिणो सङ्गमपावन–सलिलमज्जिता आत्मनो पावयन्ति जीवनं कृतार्थं च मत्वा विनष्टकल्मषा भवन्तस्सानन्दं निवर्तन्ते। कुम्भपर्वणि दृश्यमानो जनसम्मर्दो गगनतारकगण इवापरिमितो विस्मयं तनुते। अत्र हि महाहवरव इव जनकोलाहलोत्कर्षः गतस्य श्रुतं सुखयति पीडयतीव च। गमनागमनभ्रमणातुराणां स्त्रीपुरुषाणां साधुमुनिसतां महानोघः शिविरेषु गतो न तिष्ठति बुभुक्षितः, क्वचिद् धर्मवतां निश्शुल्कभोजनशिविराणि, क्वचिदिदार्त्तानामौषधवितरणम्, क्वचिद् दरिद्रनिर्धनेभ्यः कम्बलादिदानम्, क्वचिद् वैदिकानां विश्वकल्याणाय यज्ञारम्भः, क्वचित्स्वजनसङ्गच्चुतानां मिलनाय ध्वनियन्त्रेण समुद्घोषणम्, क्वचित् कृतस्नानानां गङ्गाजलाहरणं पात्रेषु, क्वचिद् धार्मिकग्रन्थानां वितरणम्, प्रथमं नागानांशोभायात्रापुर्वकं स्नानम्, क्वचित् स्वयंसेवकैरनवरतसेवादानम्, आरक्षकाणां सावधानता महती यया श्रद्धालुवो भवन्ति सुरक्षिताः। हन्त! अत्रान्तरे कतिपयैरुपद्रवकारिभिरसत्यं वृत्तं प्रसार्य विस्फोटकादिभयमुत्पाद्य च कोलाहलमुत्पादयन्तो येन केन प्रकारेण पूर्वं स्वयं धावन्ति, भीते पलायमाने जनसम्मर्दे क्वचिद् विरमन्ति, धावत्सु जनेषु बहवो मृता भवन्ति, अनेके विकलाङ्गा अपि भवन्त्येव। वयस्य! अगणिताः स्वजनसङ्गविरहिता अद्यापि बिभ्यतीव कुम्भमेलागमनात्। केनचिद् गृहिणी, केनचित् पुत्रः, कयाचित् प्राणप्रियः पतिः बहुभिस्तु निजसम्बन्धिनोऽपहारिता महति जनौघे। अतोऽतिसावधानतया कुम्भपर्वस्नानफललाभः करणीयः, अन्यथा निर्मलमनसो गङ्गा हृदय इति मन्तव्यं क्षीणसम्मर्दः प्रयागो दर्शनीयः कदाचिदिति।

वयस्य! हरिद्वारमपि द्वितीयकाशीवेद देवभूमिर्न कस्यागतन्तुकस्य मनः सर्वथाकर्षति। श्रूयते मूर्खकथितं यन्न क्वापि महान्तः सन्तोऽधुना लोके; परन्तु अहं प्रतिजाने श्रद्धेयस्वामिशिवानन्देन संचाल्यामानं यन्मातृसदनं हरिद्वारस्याप्रतिमं स्थलं यत्र भगवतीभागीरथीरक्षायै निरन्तरं पर्यावरण–संरक्षणप्रयासोऽनुष्ठीयते।

पूजनीयैरनेकर्महानुभावैस्तु गङ्गारक्षणार्थमनशनानि कृत्वा प्राणानत्यजन् येषु महात्मा निगमानन्दो यो हि गङ्गापुत्राभिधानो पंचदशाधिशतदिनानि यावदनशनं विधाय पांचभौतिकं देहमजहात्, भूयो भूयोऽसौ महानुभावो वन्द्यतेऽभिनन्द्यते च। मातृसदनमाश्रमस्तु सखे! प्रकृतिक्रोडस्थं सुरम्यं बाह्याडम्बरशून्यं गङ्गातटमवस्थितं सर्वजीवाश्रयभूतं कलियुगेऽपि कृतयुगतामादधानः सत्यतपोऽस्त्रद्वयोपेतानां ब्रह्मचारिणां निवासभूमिः। सम्प्रत्यपि स्वामिपूर्णानन्दमहामनस्वी गङ्गाभिरक्षायै अनशनं कुर्वाणो भारतीयमहर्षिपरम्परां पालयन् दृढनिश्चयेन सर्वकारं बोधयति। हन्त! न चेतति सर्वकारः। पूर्वमपि सप्तत्यधिक दिवसीयानशनानि कृत्वात्मनो गङ्गानिष्ठामदर्शयदयं मुनिः। नानशनमेषां मातृसदनमुनीनां निष्फलं कदापि जातमिति श्रूयते। मयेमेऽनेके मुनयो हरिद्वारंगतेन दृष्टा वन्दिता मातृसदनस्य नितरां दृष्टिमार्गमायान्त्येव। धन्या भारतभूर्याधुनापि विषमकलिकरालकाले एवंविधा मुनीन् जनयति। एकदावश्यमेव भारतीयै–रस्माभिमातृसदनदर्शनं तत्रत्यतपस्विनां च दर्शनं करणीयमेवान्यथा जीवनं निष्फलं मन्तव्यमिति।

अखिलभारतीयप्राच्यसम्मेलने मया भारतीयसंस्कृतेरात्मा उत्तराखण्ड इति शोधप्रत्रं प्रस्तुत, तदिदम्–

ब्रह्माण्डेऽस्मिन् सुरम्योऽसौ देशोऽयं भारताभिधः।

तत्राप्याद्योत्तराखण्डो देवभूमिः महीयते।।

सम्पूर्णब्रह्माण्डस्य रमणीयं मनोहर स्थानं भारतवर्षं वर्तते, अत्रापि भारतीया संस्कृतिश्चेतोहरा विराजते, सर्वप्रथमं विचार्यते का संस्कृतिः? शब्दकोशेषु अनेकेऽनेर्था लभ्यन्ते, यथा परिष्कृतिः धर्मिकप्रचलनम्, परिशुद्धिः इति। परन्तु समुचितरूपेण वक्तुं शक्यते यत् संस्कृतिः शारीरिकमानसिकशक्तीनां प्रशिक्षणं दृढीकरणं विकासोवर्तते। इदमालब्य निर्णीयते यत् कस्यचिदपि देशस्य जीवनशैली, कला, शिक्षणं उत्तमगुणा वाः संस्कृतिपदेनाभिधीयन्ते। विश्रुतेयं भारतीया संस्कृतिर्वियदिवेति नास्ति सन्देहः। धर्मार्थकाममोक्षाणां संकल्पना भारतीयसंस्कृतेरमूल्यो निधिरस्ति। अन्तिमं पुरुषार्थं मोक्षं यदि क्वचिदपि तपसा लभ्यते तदस्ति उत्तराखण्डः, मोक्ष एव भारतीयसंस्कृतेः प्राप्तव्यपदार्थो वर्तते। अतः मोक्षप्रदातृतया उत्तराखण्डः भारतीयसंस्कृतेरात्मा घोष्यते। यदि क्वचिदपि भारतीयाचारविचारसंस्कृतिविषये किमप्युक्तं तत्रोत्तराखण्डस्य नाम प्रथमतया जिह्वां स्पृशत्येव। श्रूयतामुत्तराखण्डशोभालोलुपा देवा जनिं लब्धुमत्राकामयन्ते। प्रमाणयति विष्णुपुराणमिदं यत्–

गायन्ति देवाः किल गीतकानि

धन्यास्तु ते भारतभूमिभागे।

स्वर्गापवर्गास्पदमार्गभूते

भवन्ति भूयः पुरुषाः सुरत्वतात्।।

अयं स एव देशो यत्र देवा अवातरन् लोकेऽलौकिकीं लीलां च चक्रुरिति। विविध–तीर्थसमलंकृतभारते अस्माकं देशे स्वर्गभूतेऽपि यदि स्वर्ग कुत्राचिद् वर्तते तदस्ति क्षेत्राम् उत्तराखण्डः। परमपवित्रामिदंहिमालयस्य प्रान्तरे गगने सुधांशुरिव विलसति।लोभनीया गिरयः, प्राणदायि पर्यावरणम्, नेत्राचौर्यप्रवीणं दृश्यं यदि भारतेऽपि क्वचिल्लभ्यते तदस्ति क्षेत्राम् उत्तराखण्डः। स्वतन्त्रस्य भारतस्य सप्तविंशं राज्यमिदं प्रथमं तादृशं राज्यं, यत्र सुरभारती राजभाषापदमलंकरोति।अस्य उत्तराखण्डस्य वैभवं विलोक्यैव सहसा जनैरुच्यते अयं प्रदेशो देवभूमिरिति। पुराणप्रमाणमिदं श्रोतव्यम्–

ब्रह्माविष्णुमहेशाद्याः

देवा नित्यं प्रतिष्ठिताः।

मुनयः सिद्धगन्धर्वा

गुह्यकापसरसां गणाः।।

अतः भारतीयसंस्कृतेरात्मा उत्तराखण्डो मन्यते।जानन्ति भवन्तो यद् विश्ववन्द्यास्मदीया भारतीया संस्कृतिर्बहुभिस्तत्त्वै रचिता विलोक्यते, तीर्थानि पर्वाणि, उत्सवा महोत्सवा, पवित्रानद्यः,, दर्शनीयवनराजयः अनन्तानि च तत्त्वानि विलसन्ति सुविस्तृतभारतभूमौ इमानि अधिकानि यदि क्वचिदेकत्रीभूतानि प्राप्यन्ते तदस्ति स्थलम् उत्तराखण्डः। पृथ्व्याः स्वर्गभूतः, अतएव भारतस्य आत्मेति मयोच्यते। पुराणेषु स्मृतिग्रन्थेषु महाभारते काव्यग्रन्थेष्वपि उत्तराखण्डः समादरपूर्वकं स्मृतोऽस्ति। स्कन्द पुराणस्य केदारखण्डे प्रोक्तमिदम्–

इयं तु पृथ्वी प्रोक्ता

स्वर्गभूमिस्तु सा स्मृता।

ततोऽत्र निवसन्तश्च

देवा एव न संशयः।।

अहो रमणीयता उत्तराखण्डस्य! सर्वसमृद्धिसम्पन्नं हरिद्वारं रमणीयतयाकर्षति सर्वानपि। गोमुखतः समुच्छलन्ती हरिद्वारं प्रविश्य गङ्गा प्रवहति। अत्र हरकीपैडीतिट्टं पौराणिकं वर्तते, अस्माकं पवित्रं कुम्भपर्व अत्र यथावर्षं समायोज्यते। श्रूयते यत् समुद्रमन्थनलब्धपीयूषबिन्दवो गगनमार्गेण नयता भगवता अत्र निपतिता आसन्। मान्या पर्वणि उत्सवे चात्रा हरिद्वारे विलोलतरधिगवतीभागीरथीतीरे स्नानं कुर्वतां साधूनां जनानां वैदेशिकानां श्रद्धा दर्शनीया भवति। अत उच्यते उत्तराखण्डो भारतस्य आत्मेति।

हरिद्वारादग्रे विराजमाने ऋषिकेशे दर्पणसमनिर्मलगङ्गाजले मज्जनं, लक्ष्मण झूलाभ्रमणम्, विशालशैलमालानां वर्णनातीतं दृश्यं न कं जनमाकर्षति? एकदा गतो वार वारं तत्रा गन्तुमुत्सहते, अभिलषति मनुष्यस्तत्रैव वसतिं कर्तुम्। इत एव निर्गत्य परमपावनी कल्मषनाशिनी विमलसलिला गङ्गा समग्रमपि विशेषत उत्तरभारतभूमिं सञ्जीवयति पावयति च। अस्मिन्नेव भारतस्य वन्दनीये राज्ये उत्तराखण्डे श्रद्धेयं केदारधाम विलसति, यस्य वर्णनं पुराणेषु बहुधा कृतमस्ति। स्वमेव भगवान् शंकरः पार्वतीं श्रावयन् प्रशंसति केदारधाम यत्

पुरातनो यथाहं वै

यथा स्थानमिदं किल।

यथा सृष्टिः क्रियायां च

मया ब्रह्ममूर्तिना।

अर्थात् मत्समान एष केदारखण्डः पुरातनोऽस्तीति भगवान् महादेवः प्रमाणयति। एतावन्माहात्म्यमुत्तरराखण्डस्य यदि श्रूयते तदा कथं न उत्तराखण्डः संस्कृतेरात्मा वर्तत इति वक्तुं शक्यते?

समुद्घोषयन्ति विचक्षणाः यत् अयमस्माकं देशो गुरुरस्ति संस्कृतेः। अतएव तु

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः।

स्वं स्वं चरित्रां शिक्षेरन् पृथिव्यां सर्वमानवाः इति समुद्घोषो महर्षिमनुना कृतः। मन्यते यत् मनुस्मृतौ प्रोक्तं ब्रह्मावर्तनामकं क्षेत्रामुत्तराखण्ड एव वर्तते। स केदारखण्ड एवाधुना मन्तुं शक्यते। यथा दृश्यते—

सरस्वतीदृशद्वत्योर्देवनद्योर्यदन्तरम्।

तं देवनिमितं देशं ब्रह्मावर्तं प्रचक्षते।।

इमं केदारखण्डं वर्णयन् महर्षिवषिष्ठः समुपदिशति यत् कण्वाश्रमादारभ्य नन्दगिरिपर्यन्तं यदस्ति क्षेत्रं तत्पुण्यक्षेत्रं भोगमोक्षप्रदायकमस्ति।–

कण्वाश्रमं समारभ्य

यावन्नन्दगिदिर्भवेत्।

तावत्क्षेत्रां परं पुण्यं

भुक्तिमुक्तिप्रदायकम्।।

अनेकविस्मयावहदृश्यघटनाकथासागरसदृशस्य उत्तराखण्डस्य समग्रं वर्णनं दुष्करं प्रतिभाति। अत्रौव शोभमानो बदरिकाश्रः मुनीनां तपस्विनां साधूनां च शरणस्थली वर्तते। तपस्तप्तुमनेके मुनयः बदरिकाश्रमं तत्रात्यं क्षेत्रं वा समाश्रयन्ते। सत्यमेवोक्तं

नदीनां सङ्गमे गिरीणामुपह्वरे धिया विप्रोऽजायत।

एतत्तु नूनमेव उत्तराखण्डस्थपवित्राश्रमविषये प्रोक्तमस्तीति वक्तुं शक्यते। अतः उत्तराखण्डो भारतीयसंस्कृतेरात्मा वर्तते।

श्रृणुमो वयं यन्महाभारतान्ते स्वर्गारोहणं पाण्डवैर्येन मार्गेण कृतं स मार्ग उत्तराखण्ड एव। कथन्न भारतीयसंस्कृतेरात्मा मन्यताम् उत्तराखण्डनामा अद्वितीयः प्रदेशः। महाभारतस्य सभापर्वणि बदरिकाश्रमं वर्णितं कथितं च अलकन्दानदी नाम्नी या नदी बदरिकाश्रमान्निस्सरति सा देवर्षिसेविता वर्तते। यथा–

एषा शिवजला पुण्या

याति सौम्य महानदी।

बदरीप्रभवा राजन्

देवर्षिगणसेविता।।

यत्र देवर्षिगणो निवसति स उत्तराखण्डः भारतीयसंस्कृतेरस्त्येवात्मा।

उत्तराखण्डो विलसति हिमालयांके, अयमेव हिमालयो यो महाकवि कालिदासस्य चेतश्चोरयते। यतो निर्गच्छति ललिता कविता–

अस्त्युत्तरस्यां दिशि देवतात्मा

हिमालयो नाम नगाधिराजः।

पूर्वापरौ तोयनिधी वगाह्य
स्थितः पृथिव्या इव मानदण्डः।

यं सर्वशैलाः परिकल्प्य वत्सं
मेरौ स्थिते दोग्धरि दोहदक्षे।
भास्वन्ति रत्नानि महौषधींश्च
पृथूपदिष्टां दुदुहुर्धरित्रीम्।।

अत्रैव विराजितानि रमणीयानि वनानि ओषधिभरितानि सन्ति, प्राकृतिकसुषमा यादृशी उत्तराखण्डे विलोक्यते न तादृशी क्वचिदपि द्रष्टुं शक्यते। योगिराजस्य बाबारामदेवस्य पतंजलिपीठं सम्पूर्णेऽपि विश्वे योगरवं तनोति। परमपावनहृदयवतां मातृसेवासदनस्थसतां तपस्या दुर्लभा केवलम् उत्तराखण्ड एव द्रष्टुं शक्यते। अतः सर्वरत्नानां खनिः, महतां धनी, तपस्विनां जनिः, ज्ञानविज्ञानमानी पूज्य उत्तराखण्डो सकलविश्वविभासितभारतीयसंस्कृतेरात्मा वर्तत इति।।

सखे! मर्यादापुरुषोत्तमश्रीरामचन्द्रस्य जन्मभूरयोध्या, श्रीकृष्णस्य जन्मस्थली मथुरा क्रीडाविलासभवनं वृन्दावनं गोकुलं वान्यतमं तीर्थस्थानं यत्र महान्ति मन्दिराणि विशाला मूर्तयो भव्यो भक्तिभावः शंसनीया साधुसङ्गतिः कमास्तिकजनं नाभिभावयन्ति भारतीयं वैदेशिकं वा। एतद्देशीयतीर्थप्रभावविस्मृतनिजदेशा असङ्ख्या वैदेशिकाः स्वीकृतसनातनधर्माणः प्रायशोऽवाप्यन्ते तीर्थभूमिषु। अहह! तीर्थस्थलानि जनैर्दूषितानि दूष्यन्ते चेति समाचारपत्रेण विज्ञायत एव प्रतिदिनम्। चौरा लुण्ठकाः अपहरणप्रियाः कुकृतिनो वासभ्या विस्मृतभारतगौरवा परित्यक्तसंस्कृतयो विमतयः प्रमत्ता इव स्वदेशीयं वैदेशिकान् व मादकद्रव्यं खादयित्वानर्थं कुर्वन्तीव, यतो देशस्य नाम कलङ्कितं भवति। सर्वकारेण जनसमुदायेन चेमे दण्डनीया अवश्यमेव, विषयेऽस्मिन् राजनीतिर्नैव कार्येति मदीयो विमर्शः।

मित्रवर! जीवने तीर्थभूमयो द्रष्टव्या इति तु सर्वो जानाति ; परन्तु न देशीयाः समस्या या देशं विनाशयितुमुन्मुक्तमुखाः सर्वत्र भ्रमन्त्यो वर्तन्ते। एकदासां निवारणार्थमपि सर्वैश्चिन्तीयं तद्दूरीकरणार्थं च प्रयासो विधातव्यः। न मार्गपतितं कंटकमनपसार्य गन्तव्यमन्यथा तदेव कंटक—मस्मत्संततिचरणौ क्षतविक्षतौ करिष्यतीव।

चतुर्थो निश्श्वास:

# समस्यावर्णनम्

वयस्य! निखिलजनाह्लादनतत्परचन्द्रमसमपि न विमुञ्चन्ति कलङ्का लोके। तज्जीवनं जीवनमस्त्येव न यत्र समस्या न स्युरिति वदन्ति साहसिन:। गुणोऽवगुणश्च प्रतिजनमाश्रिताविति सर्वो जानीते सम्यक्। खलनायकहीनं चलचित्रं प्रतिनायकविरहितं नाटकं कस्मैचिदपि नो रोचते, विपत्तिसागरगतस्य नायकस्य नायिकाया वा ततो विच्छिद्य दु:खकण्टकानि सुखावाप्तिरेव सहृदयान् द्रवीकरोति। न कश्चिदेकरसो जीवति भुवने, मधुरभोजी लावणिकमीहते, लावणिकाशनखिन्नो मिष्टमन्वेषयति, बहवस्तु समुपलब्धे सर्वरसे तिक्तमपि सहर्षमभिलषन्ति, हन्त! सत्यमाह कश्चित्—भिन्नरुचिर्हि लोक:। एवंविधमस्मज्जीवनमस्तीति नात्र संशय:। सखे! पश्यामि न कश्चित्सुखी सकलसुखोपभोगोपकरणविद्यमानेऽपि, यया कयाचिद् ह्रस्वया दीर्घयया वा समस्यया ग्रस्तोऽवसीदतीव प्रतिपलम्। यदि कश्चिज्जनो न समस्यामुक्तस्तदा एकार्बुदोत्तरजनसङ्ख्यावानयं देशो भवेत्कथं समस्याशून्य:? साम्प्रतमस्मद्देश: समस्याबहुलो बहुरोगान्वितमानव इव रोदिति। श्रूयतमवधानतया।

प्रथमा समस्या प्रजातन्त्राभिधाना वर्तत इति मन्मतम्। परिभाषितं केनचित् प्रजातन्त्रं यत् प्रजातन्त्रं प्रजानां प्रजाभ्य: प्रजाभिर्निर्मितं शासनम्, एतत्तु सत्यम्; परन्तु तन्त्रेणानेन देशसंचालनायै चितो राजनीतिवर्गो गृध्रतीव। प्रतिदिनं दूरदर्शनवृत्तैरिदं सूच्यत एव। एषु नेतारोऽनेके तु देशीयधनमनुचितरीत्यात्मन: कृत्वा सुखं भुंजाना: शेरते, जनविकासाय दत्तं वित्तं घोटालाहवालामार्गेण क्व गच्छतीति भारतीयो बालकोऽपि विस्तरशोऽवगच्छति। कार्यालयेषु सुविधाशुल्कग्रहणम्, नेतृप्रभावातिशयं च सर्वदा दृष्टिपथमायात्येव। भ्रष्टा

अधिकारिण उत्कोचं काक इव प्रेक्षन्ते, वका इव ध्यायन्ति, सिंहा इव भाययन्ति तर्जन्ति, हस्तिन इवाधिकारकायेन बृहन्ति, कुक्कुरा इव बुक्कन्ति; परन्तु प्राप्तधनास्तु मृदुलं भाषन्ते सुजना इव, हस्तं स्पृशन्ति सुहृद इव, परिष्वजन्ते भ्रातर इव, दर्शनमात्रेण प्रसन्नवदना स्वजना इव विविधवार्तालग्ना यात्राकालिकधूर्तजना इव व्यवहरन्तीव येन लोकतन्त्रह्रासः। मतप्राप्तिकामनापूरितहृदयस्य नेतुस्तु दशा दयनीयैव सखे!

श्रूयताम्—

वाण्यां छलं मनसि नैव परोपकार—
श्चित्तेऽदया वचसि कर्मसु चौर्यभावः।
रूपे सदा शरटवत् परिवर्तनानि
कोऽसौ वदन्तु सुहृदस्त्वरितं विचिन्त्य।।१

एको न यस्य सुजनस्य मतोऽद्य धर्मो
न श्लाघनीयमखिलं प्रथितं चरित्रम्।
यो देशजातिजनतासुखहेतुभूतः
कोऽसौ वदन्तु सुहृदस्त्वरितं विचिन्त्य।।२

सम्भाषते स मुनिवद् गुरुतां दधान—
श्शिष्टो भवन् नमति सर्वजनस्य पादौ।
स्पष्ट्वा करं मतमसावभियाचमानः
कोऽसौ वदन्तु सुहृदस्त्वरितं विचिन्त्य।।३

मंचङ्गतो हसति रोदिति दिव्यबुद्धि—
र्हृद्यं प्रियं वदति नामृततुल्यवृत्तम्।
हृत्वा जनस्य च मनो लभते मतानि
ज्ञातो वदन्तु सुहृदस्त्वरितं विचिन्त्य।।४

लब्ध्वा जयं प्रमुदितस्सरसं कदाचि—
दभ्यागतान् कथमहो स्वजनान् न वक्ति।
आरूह्य नो सुखदवित्तमयीं च शय्यां
शेते वदन्तु सुहृदस्त्वरितं स नेता।।५

ग्रामङ्गतः श्वेततूलनिर्मितपटाच्छन्नदेहः क्रूराननोऽपि स्मयमानमुखो हिंसकवृत्तिजनावेष्टितोऽपि जनताहिंसानिवारणकृतप्रतिज्ञो ग्रामनालिकामार्गविद्यालयादिनिर्माणमेव मदीयं प्रथमं कार्यमस्तीति जल्पन् सर्वान् प्रणमन् बद्धांजलिर्हस्तमिलनं कुर्वन् मम चिह्नं स्मरणीयं बन्धवः! इति भाषमाणः, अपरिचितं परिचितमिवावलोकयन्नालपन् वृद्धान् पादस्पर्शेन कदाचित् खट्वामुपविश्य जलं पीत्वा भुक्त्वा च सहृदयग्रामीणान् निर्जित्य कृत्रिमहावभावैर्नायाति विद्युदत्र श्रुत्वा चिन्तितास्यो महतीं रेखां ललाटे दर्शयन्ग्रामान्तरं प्रविशति प्रजल्प्यासत्यं यत्किंचित्। तत्रापि अनर्गलमुक्त्वा यथाशक्यमाशामुत्पाद्य देशविकासाय रटितं भाषणं श्रावयित्वा च नगरे स्वजनकरतध्—वनिप्रसन्नो हस्तौ दोलायमानो विपक्षिदलं निन्दन् निर्गच्छतीवान्यत्र। क्वचित्तु मतदातृभ्यो धनं प्रदाय मतक्रयणमपि कर्तुं समर्था भवन्ति नेतारः। चयनान्ते प्राप्तविजयाः संसद्भवनं विधानसभाभवनं गत्वा राजनीतिप्रतिनिधयो निजलाभाय कलहायन्ते असभ्या इव, युद्धभन्ते शत्रव इव, परस्परमधिक्षिपन्ति चौरा इव, निन्दन्ति मिथः खला इव, ध्वंसयन्ति गरिमाणं शठा इव, खण्डयन्ति महिमानमाक्रमणकारिण इव यत्पश्यति सर्वोऽपि देशः! न निवर्तन्ते ग्रामं नगरं प्रति चत्वारि वर्षाणि यावत्। निर्वाचनक्षेत्राद्गतो जनस्तु कश्चित् कीट इव प्रतीयते नेतुर्दृष्टौ, न ज्ञातुमिच्छति नेतासौ यत्कथं जीवति, म्रियते वेति विमुक्तचिन्ताभारोऽसौ प्रकामं प्रचुरं धनमपहरति। केचन सत्यशीला नेतारो भ्रमन्ति स्वनिर्वाचनक्षेत्रं तत्रत्यां दृष्ट्वा दशां श्रुत्वा च समस्यां विगलितान्तःकरणास्तद् दूरीकुर्वन्ति; दूरीकर्तुं वाशामुत्पादयन्ति, परन्तु सङ्ख्यैषामल्पीयसी लोकेऽधुनास्ति। हन्त! कदा लोकोऽयं ज्ञास्यति लोकतन्त्राधिकारमिति चिन्त्यमस्ति ? यदि कश्चिद् देशभक्तो जागरितो लोकतन्त्रहननक्षुब्धः किमपि वक्तुमुत्तिष्ठति स मृषादोषारोपणैर्मिथ्यापराध्—ादर्शनैरभियोगेन योज्यते। पुनश्च शक्त्या कारागारे निक्षिप्यत एवेति नातिचित्रं वृत्तम्। अतो लोकतन्त्रमिदमपराधितन्त्रमेव बोध्यम्। अधुना कतिपये राष्ट्रसेवकाः समर्पितजीवना अन्नारामदेवारविन्दप्रभृतयो यतमाना युद्धभमानाश्च

जनजागरणं कुर्वन्तो वास्तविकीं स्वतन्त्रतामभिलषन्ति। यद्येतेषामुद्योगः सफलस्तदा देशोऽयं विकसितोऽवश्यमेव भविष्यति जनता च सुखमनुभविष्यतीति मन्ये।

सखे! द्वितीया समस्यारक्षणव्यस्थास्ति। आरक्षणमिदस्ति प्रतिभावतां यमराज इव वृत्तिहननात्, अपरेषां कनकवर्षणमिवायोग्यत्वेऽपि वृत्तिलाभात्, परिश्रमशीलानामभिशाप इव सीमितपदोपलब्धेः, अन्येषामत्यल्पश्रमाणां श्रमशून्यानान्तु वरदानमिवासीमित पदोपलब्धेः। सामान्यानां विशिष्टबुद्धीनां गरलपानमिव मृतिकारणम्, अन्येषान्तु सामान्येतराणां सुधापानमिव जीवनहेतोः। चिन्त्यतां संविधानद्वारा कतिपयजातिमतां जीवनोन्नतये आरक्षणं प्रदत्तम्, परन्तु कथमेषामेव विकासायेयं व्यस्वस्था? किमेषु धनिनो न सन्ति? किमेतेभ्यः पृथक् काचिदपि जातिर्न वर्तते या दरिद्रा न दृश्यते? यदि सर्वेषु वर्णेषु सर्वासु जातिषु बहवो निर्धनास्तर्हि कथं कतिपयेभ्य एवारक्षणव्यवस्था? न चिन्तयति सामान्यो वर्ग साम्प्रतम्; परन्तु आगामिपंचाशद्वर्षेषु पुनः सामान्यानां कृते आरक्षरणव्यवस्था करणीया भविष्यत्येव! अतएव सर्वकारेण गहनं चिन्तनं कार्यम्। यद्यपि श्लाघनीयोऽयं प्रयासोऽस्मद्बन्धूनां विकासाय संविधानस्य तथापि शिक्षाचिकित्सावैज्ञानिक—

प्रशासनिकक्षेत्रे प्रतिभासम्पन्ना एव सम्यक् कर्तव्यपालनं दायित्वनिर्वहनं च कर्तुं क्षमा भवन्ति नान्य इति जानानोऽपि सर्वकारो न राष्ट्रहिताय चिन्तयति। सर्वजातिषु ये निर्धनास्तेषां विकासायारक्षणं व्यवस्थापेयदन्यथा देशः प्राणहीनदेह इव भविष्यति। यदि आरक्षणं केभ्यश्चिद् देयमेव तदा सर्वकारो गर्भकालादुच्चशिक्षापर्यन्तं समग्रमपि धनादिव्ययं कुर्यान्न तु विशिष्टशिक्षादिक्षेत्रेष्वारक्षणं दद्यादिति मदीयो विमर्शः। सर्वेषां समानावसरो देय एवेति मन्निवेदनम्। भोः संविधानसंशोधका चिन्तयत चिन्तयत सत्वरमिदम्।

वयस्य! तृतीया समस्या यौतुकमस्ति भारतस्य। यौतुकं हि नाम विवाहनिमित्तं कन्यापक्षतो गृह्यमाणं चूष्यमाण।दीयमानं वा प्रभूतं वित्तं, यद्धि दाता पराधीनोऽपि नेच्छन् गृहं भूमिं च विक्रीय वरपक्षायार्पयति। स यथा प्रयतते येन तत्पुत्री वरगृहे सुखमनुभवेत्। परन्तु यौतुकप्राणोऽयं समाजः पुत्री सन्नपि पुत्रविवाहे न दयां प्रकटयति। भवति दीनहीन इव कन्यापाणिग्रहावसरे स्वयमपि। अनेकस्थलेषु तु विवाहिता गृहाद् बहिस्क्रियन्ते वन्यजीवा इव, कतिपयगृहसदस्यैस्ताडभन्ते पशव इव, न भोज्यन्ते, जीर्णशीर्णवसना कारागारजीवनं यापयन्त्यः सततं रुदन्तीव। हन्त! अस्मादेव कारणाज्जगति कन्याभ्रूणहत्या समुत्पन्ना कदाचित्। जानन्ति सर्वे यज्जातायां कन्यायां महद्धनं देयं भविष्यति विवाहे' कन्येति जाता महतीति चिन्ता'। यद्यपि कन्यका एव

सेवाभावभरितहृदया न तु पुत्रास्तथापि पुत्राभिलाषी समाजः स्ववंशोन्नतये पुत्रमेव कामयते। अहह! निर्दयसमाज! को दोषोऽस्या गर्भमागतायाः कन्याया या जननात्प्रागेव निहन्यते निजमातृपितृभ्याम्। स चिकित्सकः प्राणिहन्ता हन्त! येन गर्भस्थः कन्याभ्रूणो द्विमासिकस्त्रिमासिको वा दन्तुरक्षुरिकाभिः कुक्कुटमिव शनैश्शनैर्मार्यते। सा माता स च पिता राक्षसौ याभ्यामिदं कार्यते। मित्रवर! कन्याभ्रूणहत्यानिवारणाय यद्यपि सर्वकारेण कठोरविधानमाविष्कृतं तथापि गुप्तरूपेण कुकृत्यमिदं सर्वत्र क्रियमाणमस्त्येव। कन्याभ्रूण हत्यातो लिङ्गानुपातः पतितो देशे। प्रतिसहस्रं पुरुषेषु सार्द्धसप्तशतमहिला लोकिताः, महान् विस्मयावहः चिन्तनीयोऽयं विषयः! कथं सृष्टिप्रक्रियाक्षुण्णा स्थास्यति? कथं विवाहो भविष्यति प्रियपुत्राणाम्, राजस्थानपंजाबादिराज्येषु विकटा भयावहा दुस्थितिरियं सुरसेव विवृतानना दृश्यते। समुत्पन्नापरा समस्या सखे! यौनसुखतृप्तये सर्वत्र महिलापहरणं वर्द्धमानं वर्तते। इदं कुत्सितं कर्म तु रक्तबीजमिव प्रादुर्भवत् समग्रमपि राष्ट्रं भाययदस्ति। न महिलाजीवनमपहरणभयात् सुरक्षितम्। श्रूयते दूरदर्शनसमाचारेषु पठयते पत्रेषु नैकमपि दिनं यस्मिन् न मिलेद् वृत्तमिदम्। यौनतृप्तिकामनया कश्चिदपहरति क्षेत्रगतां महिलाम्, कश्चिन्मार्गे चलन्तीम्, कश्चन नगरादपि, अपरे रेलयानानादपि, किं कथयानि क्वचिद् गृहे शयानापि दुष्टैरपह्रियत एव। हन्त! बहवस्तु विवाहप्रलोभनैर्युवत्यः स्ववशीकृत्य वेश्यालये विक्रीणन्ति, अन्यथा मारयित्वा यत्र—तत्र जलाशये कूपे शस्यक्षेत्रे वा क्षिपन्ति। न सम्प्रति युवतीनां स्वच्छन्दभ्रमणमुचितमिति पंचायतेषु घोष्यते। धनिनोऽपराधिनो बाहुबलिनोऽधिकारिणोऽन्ये चानेके विगतवयसोऽपि यौनसुखाभिलाषा विख्यातकीर्तयोयथाशक्ति बलं धनं पदं न चिन्तयन्तो कामा—ग्निदह्यमानशरीरा बलात्कारं कुर्वन्तः प्रकाशं तत्परिशमनाय तस्मादपि प्रचुरं धनं प्रयच्छन्तीति जानाति लोकः। एतस्मादपि अपहरणबलात्कारयौतुकभयाल्लोके कन्याभ्रूणहत्या रक्षःकुलमिव परिवर्द्धनमस्ति। कतिपयनीचानां दृष्टौ तु नारी भोग्येव न तु पूज्या मता। वयस्य! यावल्लोके स्त्रीपुरुषसङ्ख्यायां सन्तुलनं न स्थाप्यते न तावदपहरणादिकुकृत्यतो मुक्तिरिति। केचन सुमुखीवन्तोऽपि कामिनीलम्पटाः परस्त्रीदर्शनसमर्पितजीवनाः परदारप्रिया गवेन्द्रा इव विचरणशीला निर्मर्यादा विगतभयलज्जा आत्मीयमपि जनं न विमुञ्चन्तीति दृष्ट्वा श्रुत्वा हृदयं दलतीव लोकस्य। अतः सत्यमाह भर्तृहरिः'धिक् तां च तं च मदनं च इमां च मां च'।

सखे! आस्वपहरणबलात्कारघटनासु यद्यपि बहूनि कारणानि तथापि भोज्यवस्तुषु मिश्रणम्, शस्योत्पादने उर्वरकप्रयोगः, भोजने रसायनवृद्धिः, शरीराङ्गप्रदर्शनमृ,

अत्यल्पोद्दीपकवस्त्रालंकार–धारणम्, विवाहविच्छेदः, प्रेमविवाहाभासः, नर्तकीव व्यवहरणम्, मातृपित्राज्ञोल्लङ्घनम्, गुरुशास्त्रादेशविपरीताचरणम्, यत्र तत्र स्वतो मित्रत्वस्थापनम्, असमयेऽश्रवणीया–दर्शनीयकथा–चित्रपरिचयौत्सुक्यम्, ततस्तत्पूर्तये तत्प्राप्तौ प्रयासारम्भः, पुनः पुनः प्राप्तिकामनावृद्धिरित्यनर्था उत्पद्यन्ते। सत्यमाह महाकविः 'ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः''कामी स्वतां पश्यति' च। अत्रैव गीतोक्तिरपि–'हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते।' इति सर्वमपि वचनं मननीयमस्ति। हन्त! सखे मूढोऽहं स्वगतमपि प्रकाशं करोमीति संक्षिपाम्यर्थोपक्षेपकमिवनाख्येयं वृत्तमिदम्। परन्तु न निमीलिताक्षमपि कपोतं विडालं विमुञ्चतीति मत्वा प्रत्यक्षीकरोमि यद्यौतुकं दशमुखमिव रावयति, कन्याभ्रूणहत्या सुरसेव ग्रसति, अपहरणबलात्कारौ दुर्योधन कंसाविव दुःखयतो लोकान् यान् हन्तुमिन्द्र इव सर्वशक्तिमानपि सर्वकारो व्यथत इव, मन्येऽहं यदियं समस्या तावन्न दूरीभविष्यति केवलं सर्वकारेण यावन्न जागर्ति लोकसमुदायः। प्रबुद्धे लोके निखिलोऽपि देशो दर्शनीयतां यास्यतीति।

आतङ्कवादश्चतुर्थी समस्या वयस्य! विश्वस्य समस्यासु महतीषु आतङ्कवादनाम्नी समस्या चिन्तनीया दृश्यते। नैकोऽपि देशो यो नाक्रान्तोऽनेन वादेनेति। एभिस्तु त्यक्तप्राणै रक्तपिपासाव्याकुलैर्दानवैर्निरपराधिनो निर्दोषा हन्यन्त एव। अहह! किमच्छिन्तीमे जानाति सर्वोऽपि लोकः। कदाचित्समुद्रमार्गेण शून्याध्वना वागत्य गुलिकया विस्फोटकैश्च महान् रुधिरसरितो वाहयन्ति। आपणं गता विपणीषु क्रयसंलग्ना लघुशिशुवत्यो महिला मन्दिरं दर्शनार्थमुपस्थिता भक्ता अकस्मात् विस्फोटनैर्मार्यन्ते। समुद्भवति कोलाहलः सर्वत्र चीत्कारः क्षणेव तत्स्थलं श्मशान इव दृष्टिपथमायाति। कश्चिद् भिन्नैकरः, कश्चित् छिन्नपादद्वयः, काचिद् विदीर्णोदरा, कश्चन शिरोरहितकायः, प्रसृतानि शरीराङ्गानि झंझावातनिपातितपादपपत्राणीव न कस्य हृदयं विदारयन्ति। विस्फोटविनष्टाक्षियुगलः क्रन्दन् कश्चिदपरो विलपन् स्वजनमन्वेषयन् करुणं विरुवन् न कस्यापि द्रष्टुर्नयनं सजलं करोति। हन्त! सत्यमेते आतङ्कवादिनःहिन्दुविरोधिनस्तु कलियुगीनराक्षसा एव सन्ति,

श्रूयतामिदं सखे! मारिताः निर्दोषा जना गोधरानगरे रेलयानमाढास्तदानीन्तु मदीयं रक्तं दह्यमानमेवमुदघोषयत्–

धन्यो भारतवर्षदेश एष सुसखे बुद्धो महात्माभवत्

हिंसापापनिवारणय च महावीरो जनिं लब्धवान्।

श्रीमन्मोहनदासगान्धिसुमतेस्तद्गोधरासुस्थले
प्रान्ते गुर्जरनामके बहुनरा नार्यो हताः किन्नरैः।।६
कोऽयं पामरमानुषोऽरिदनुजो मूर्खो महान् भ्रातृहा
धर्माधर्मविवेकमात्ररहितो यो भारतीयस्स्मृतः।
क्रूराणामधुनाग्रजो हतशुभप्रज्ञासुविद्यो नरः
त्वङ्मांसास्थियुतः कथं स हतवान् निर्दोषबन्धून् जनान्।।७

ये ये तत्र हि कारसेवकनराः श्रीरामदासा मृताः
याताः पुण्यसुखप्रदं रघुपतेर्धामप्रमुग्धा इमे।
धर्मान्धा मनुजाः कुकर्मनिरता ये घातका दुर्जना
अल्हादेशविरुद्धगामिकुजनास्तेऽधस्तलं यान्त्विति।।८

श्रीरामः पुरुषोत्तमः प्रियकरोऽयोध्यानरेशः श्रुतः
श्रीरामायणपूजिते बहुविधे पौराणिके सङ्ग्रहे।
कोऽयं शासकबाबरोऽत्रच जनिं सम्प्राप्तवान् श्रूयते
यस्मै हिंसनकार्यकारिदनुजैस्तैपामरैर्युध्यते।।९

भो भो भारतभूमिजाः सुविदिता हे हिन्दवः सोदरा
सीतारामसुमन्दिराय सततं दक्षाः क्रियापदने।
विश्वामित्रवषिष्ठविप्रतनयश्चाणक्यतुल्यप्रभाः
सन्तः शोणितबिन्दुमात्रतिलकाः पैशाचवस्त्रान्विताः।।१०

झंझावातनिभाः पतन्तु सहसा शत्रोर्दले बान्धवाः
अन्विष्यारिसमूहनाशनरताः कुर्वन्तु युद्धं भषम्।

पाकिस्तानकुगर्वमोचनपरा मद्भ्रातरः सैनिकाः

शत्रूणां दलनं स्मृतं न सहनं शौर्यस्य नो लक्षणम्।।११

भो भोः क्षत्रियभूसुरसुता दिव्यायुधाः सङ्गरे

श्रीभीमार्जुनरामकृष्णसदृशा वीरा महान्तोऽखिलाः।

धर्मे स्वे निधनं वरं प्रददतो गीतामृतापायिनः

क्रूरान् द्वेषभरानिमानरिगणान् घ्नन्तु त्वरं भ्रातरः।।१२

यज्ञेऽस्मिन् स हि मानवो निपतितः शूरश्च वीरस्स्मृतः

ये कान्ताकुचरूपवर्णनरता बालाकपोलप्रियाः।

रक्तौष्ठाधरपानकार्यकुशला आलिङ्गने तत्पराः

रे रे रे कुलदूषका अरिसमा आगच्छताग्रे युधि।।१३

येषां विनाशोऽवश्यमेव सर्वैः करणीयः। अयमातङ्कवादवटवृक्षः सार्वभौमः प्रसारितशाखः सद्य एव मूलादुन्मूलनीयो न तु कैश्चिदपि प्रश्रयजलैः सेक्तव्यः। अन्यथा' पयःपानं भुजंगानां केवलं विषवर्धनम्'। निगृहीतानामातङ्कवादिनां विषये न बहु विचारणीयं, अतिकठोरदण्डद्वारा शूलमारोप्य वेमे मारणीया नात्र राजनीतिः कार्या। यश्च देश आतङ्कवादसंरक्षणं कुर्वन् गृहीतो भवेत्तस्य वैश्विकनीत्या बहिष्करणं घोषणीयमिति।

पंचमी समस्या सखे! प्रदूषणमस्ति। अस्माभिर्जीवनदायिन्यो नद्यो नालिकादूषितजल—धारयावकरप्रक्षेपणैश्चविनष्टाः ,या गङ्गा भगीरथानवरततपःप्रभावानीता कदाचिज्जनं जीवनं प्रकृतिं च रक्षयन्ती दृष्टा साधुना साधुनासाधुना वा स्वकृतघ्नसन्ततिखिन्नमानसा मातेव दूयमानास्ति। हरिद्वारादग्रे प्रवहन्ती भागीरथी या ततः पूर्वं शुभ्रज्योत्स्नापुलकितसलिला दुग्धधवलतरङ्गाम्बरा मनोहारिणी क्वचिद् यौवनोन्मत्तवनितेव निस्सङ्कोचं विचरन्ती यमुनादिनदीयुवतीस्तिरस्कुर्वर्णात्म सौन्दर्येण सर्वानपि सद्य आकर्षति स्म, सैव प्रतिपदं स्वार्थिभिर्मनुजैरवरुद्धयमाणा क्षतविक्षततरङ्गनिकरा दुश्शासनप्रवृतिकुजनैर्दूष्यमाणा भारताङ्गणे प्रेक्षमाणात्मीयान् सक्रोधं ज्वलन्तीवास्ति। हन्त! गङ्गाम्भो दूषितमस्माभिरुपकृतैरसकृदपि निस्त्रपैः। यत्पावितं जलं कदाचिद् वैदेशिकैर्विदेशं नीतं सादरमौषधभरम्, तदेव मलमूत्रप्रक्षेपणेन मृतपशूनां

प्रवाहेणापशिष्टवस्तुत्यागेन सुगन्धा दुर्गन्धा, अमृतसलिला विषजला संवृत्तेति केषामविदितमिह भारतीयानाम्? दौर्भाग्यमेवास्माकं यत्र लक्षाधिकं धनं प्रतिवर्ष गङ्गायमुनानिर्मलीकरणार्थं व्ययीक्रियमाणस्ति; परन्तु नेमे नद्यः प्रदूषणरहिता अभूवन्। सखे! विभिन्नाः संस्थाः सर्वकारस्य योजनाश्च केवलं नाममात्रमेव भारते, न तु कर्मणेति वर्तन्ते। हन्त! सर्वत्र जलस्तरो निम्नगामी लक्षितोऽधुना। आगामिकतिपयवत्सरेषु सरस्वतीव गङ्गायमुनादिनद्यः सद्यः संस्मरणीयाभिधाना भविष्यन्तीति मन्ये। वयस्य! या यमुना संसारप्रदूषणहन्त्रा श्रीकृष्णेन भगवता कालियादमनद्वारापानमज्जनयोग्या विहिता पुरा, सैषा मलिनविषपयोधरा पूतनेवावलोक्यते। धन्यो भारतसर्वकारो यो वैदेशिकसहयोगं नदीनिर्मलीकरणाय याचते। मित्र! गङ्गायमुनादिनद्यो वृद्धमातर इव रुग्णा, वल्मीकावृत्तपादपा इव, प्रयोजनशून्याः, असहायाबला इवोपेक्ष्यमाणा नूनमेव प्रतीकारं ग्रहीष्यन्तीति सत्यं वच्मि।

सुहृद्वर! षष्ठी समस्या जनसङ्ख्यावृद्धिरस्ति। अस्माकं जनसङ्ख्या विद्युद्गत्या प्रतिक्षणं मशकसङ्ख्येव वर्द्धमाना वर्तते। एकस्य जनकस्य त्रिचतुरा सन्ततिरिति सामान्यदृष्टिर्ग्रामेषु द्वित्राः नगरेष्वपि मन्तुं शक्यते। यद्यपि सीमिता भूमिः सीमितानि संसाधनानि वर्तन्ते तथापि न चिन्त्यते जनैः। जनसङ्ख्यावृद्धिकारणादेव कृषियोग्यं क्षेत्रमावासाय गृह्यमाणमस्ति, किं चाद्यौगिकविकासार्थमपि व्यापकं क्षेत्रफलं प्रतिवर्षमधिगृह्यमाणम् अन्नोत्पादने सङ्कटमुत्पादयतीव यस्मात्कारणात्सुन्दरमपि वनं छिद्यमानमस्ति जनैः सर्वकारैश्च। विनष्टानि बहुमूल्यान्यौषधानि वन्यवृक्षोच्छेदनात्। वन्यजीवाश्च विलुप्ता लुप्यमानाश्चानेकेष्वङ्गुलिगण्याः श्रूयन्ते। जीवनप्रदवनविनाश कारणान्महज्जलवायुपरिवर्तनमवलोकितम्, न यथासमयं वर्षति मेघो न च शुद्धो वायुर्लभ्यते क्वचित्। शस्योपयुक्तभूमिह्रासादन्न मूल्यवृद्धिर्वनविनाशाच्च फलमूलमूल्याभिवृद्धिश्च भारतं पीडयत एव। हन्त भो! अतिसीमितभूमौ प्रचुरशस्योत्पादनार्थं विषतुल्यमुर्बरकं कृषकैरनवरतं प्रयुज्यमानमस्ति, यत उत्पद्यमानमपि शस्यं विषाक्तमेव जातमधुना, इदमेवाम्रादिफलानां विषये साक्षाद् दृश्यते। अन्नफलादिमूल्यन्तु गगनं स्पृशतीव भारते। विविधविषरसायन प्रयोगेणान्नफलादिषु तथास्वादोऽपि नास्वाद्यते! एकापरापि विचित्रा समस्यावयस्य! अधिकान्नफलशाकोत्पानाय सङ्करबीजानि कृषि—वैज्ञानिकैराविष्कृतानि यान्त्यल्पकालेष्वेव यथाभिमतमुत्पादनं प्रयच्छन्त्येव; परन्तु दौर्भाग्यमस्मिन् विषये! सङ्करबीजन्तु परिहेयमेव देशादन्यथा न भविष्यत्काले शुद्धानि गोधूमादिबीजान्यपि द्रष्टुं मिलिष्यन्ति। को न सखे! आपणं गतो देशीयं त्रपुषं वांछति? वदन्ति अरे वैज्ञानिका

मैवं कुरुत। सङ्करबीजादलाबूर्दिनैकस्मिन्नेव पूर्णाकारमवाप्नोति तद्भक्षणे न रसो न बलं च पौष्टिकं तत्त्वमेव लभ्यते। कृषका अपि पर्याप्तोत्पादनायानुचितमाचरन्ति, अन्यत्र प्रयुज्यमाना सूचिका शाके प्रयुज्य तद् विषमयं कुर्वन्त्येव। अत आसां सर्वासामपि समस्यानां मूलं कारणं जनसङ्ख्यावृद्धिस्ततः समुत्पन्नान्यपराणि कारणानि चेति। यदि सर्वकारः सर्वेभ्यः परिवारनियोजनमनिवार्यं कुर्यात्, किं चैकसन्ततिमानेव सर्वकारसेवां प्राप्स्यति, एककन्यावान् पुरस्करणीयो द्वयधिकसन्ततिमन्तो न सर्वकारसेवां लब्धुं शक्नुयुः न च प्रोन्नतौ ग्राह्याः। इत्थं कृते कदाचिज्जनसङ्ख्यावृद्धिसमस्या दूरीभविष्यति निर्वृत्तिकता च मरिष्यति। अतोऽस्मिन् विषये समीक्ष्य देशहिताय कठोरतया विधानमन्वेष्टव्यमद्यनतनसर्वकारेण।

वयस्य! सप्तमी समस्या वस्तुषु मिश्रणं जनसङ्ख्यावृद्धिकारणादेव दृश्यमानमस्ति सीमितवस्तुषु सत्स्वसीमितजनापेभोगोपलब्धेः। भोज्यलेह्यचोष्यपेयवस्तूनि येन केन प्रकारेण मिश्रितानि येषां ग्रहणाद् बहवो रोगाः समुत्पद्यन्ते। भोज्येषु मिष्टान्नानि मिश्रणप्रक्रियया निर्मितानि पर्वोत्सवावसरे भोक्तुः स्वास्थ्यं कीदृशं कुर्वन्तीति भोक्तेवाभिजानाति। एतदशनरुग्णो म्रियमाणो याति चिकित्सालयं परामृशति चिकित्सकान् सेवते औषधानि महार्घाणि, रुधिरशुद्धतां बहुधाा यन्त्रेण कारयति। असौ चिकित्स्यमा एवार्द्धशरीरो जायते मृतकसमः, उद्भवति ततोऽन्यो रोगः। हन्त! औषधालये प्राप्तव्यान्यौषधानि न शुद्धानि, बहूनि चान्यानि चणकगोधूमचूर्णनिर्मितानि नेमानि भक्षितान्यपि रोगान् प्रशमयन्ति। शारीरबलवर्धनाय पिबति दुग्धं जनो अहो! उर्बरकफेनिलशर्करादिरसायनमयं न शक्तिं वर्धयति, ह्रासयत्येव शेषमपि बलम्। परिचिन्ततोऽसौ हरितशाकाय याति शाकापणम्। हन्त! हरितानि शाकान्यपि विषमयानि विस्मयं समुत्पादयन्ति। उत्पादयितृकीटनाशकौषधि—रसायनसिंचितानि हेयोर्बरकोत्पादितानि आपणमागतानि विक्रेतृभिः पुनः पुनोऽपरै रसायनैराप्लावितानि यापितपंचाधिकदिनान्यपि सद्यःकर्तितानि हरितानीव प्रतिभान्ति, यानि क्रीत्वा अतिमिश्रितोपस्करैः साकं शाकं क्त्वा भुक्त्वा च म्रियत एवाहो। विचित्रोऽयं लोको मिश्रणसंलग्नः सर्व आत्मनः कृते शुद्धमभिलषति।

सखे! अष्टमी समस्या आधुनिकशिक्षाप्रणाली या न दोषरहितेति जानाति सर्वोऽपि देशीयो जनः। प्राचीना शिक्षा तु अध्यात्ममूला, आधुनिका त्वर्थमूला, यत्र विद्योपार्जनं गुरुकुलेषु क्रियते स्म। अत्र विद्यालयेषु, उपनयनान्ते गतो गुरुकुले वटुको गृहाद् बहुदूरं ब्रह्मचर्यव्रतं पालयन् शिलोंच्छवृत्तिस्सन्गुरुकुलाय भिक्षां याचमानोऽधीते स्म। नृपपुत्रः सामान्यजनपुत्रो वा सहैवैकस्मिन् परिधाने समानं भोजनं भुंजानाः समाने

शयने शयानाः समानं कर्म चा कुर्वाणा गुरुं सेवन्ते स्म, यत्रानुशासनमेव प्रधानं भवति, अतो वक्तुं शक्यते यदनुशिष्टा एव ज्ञानं लब्धुमर्हन्ति नान्ये। यद्यपि तत्कालीनराजाजानो गुरुकुलस्य समग्रोऽपि व्ययभारं वहन्ति स्म सादरं तथापि गर्वाभिमानादि–दुर्गुणदोषपरिहारार्थं भिक्षन्ते स्म वटुका इतिमच्चिन्तनमन्येषां च। गुरवस्तु समर्पितजीवनाः शास्त्र–संरक्षणार्थं न तूदरभरणायानवरतमध्यापयन्ति स्म। वेदवेदाङ्गोपनिषदादिवैदिकी शिक्षा लोकग्राह्यासीत्तदानीम्। श्रूयते यद् गुरोस्तु मौनं व्याख्यानं शिष्यस्तु छिन्नसंशयः इति। इमे गुरवः स्वशिष्यबुद्धिविकासं दृष्ट्वा विकसितारविन्दनयना भवन्ति स्म, शिष्येभ्यः पराजयाकाङ्क्षिणोऽवनरतं पाठयन्तो दृष्टाः। यथाकर्ण्यते सर्वत्र विजयमिच्छेत् शिष्यात्पुत्रात्पराजयम्। इदमासीद् गुरुकुलस्य वैशिष्टभम्। एतस्मादेव कारणात् वषिष्ठविश्वामित्रगर्गादिमहर्षयः, श्रीरामकृष्णसदशा महापुरुषाः, शुक्रचाणक्यादयो नीतिकाराः, पाणिनिपतंजलिसमाना वैयाकरणमूर्धन्या विद्वांसः, भासकालिदासप्रभृतयो महाकवयः, सुश्रुतचरकादयो वैद्याः समजायन्त। हन्त!दूरमपास्ता गुरुकुलीना शिक्षा प्रणाली, अद्यतनविद्यालयेषु तु बहुत्र तथाविधं शिक्षणमध्यापनं नैव चानुशासनमेव प्रदीयमानमस्ति। दुःखेन वदामि साम्प्रतिका गुरवो गुरुत्वविपरीतमाचरन्ति बहवो न तु सर्वे। नैव पठने पाठने वा रुचिरवलोक्यते उच्छृङ्खलता तु स्पष्टमेव दृश्यते। अहो विनष्टा शिक्षा किम्?इदं सर्वमवलोक्य कर्मठोऽपि कर्महीन इवाचरति, सर्वकारोऽपि न जाने कथमवकाशवृद्धिं कुरुतेऽधुना। अवकाशाधिक्ये दीयमानापि शिक्षा म्रियमाणा भवति साम्प्रतम्। अतोऽस्मिन् विषये सर्वथा चिन्तनीयम्। किञ्च महापुरुषाणामवकाशदिवसेषु तद्विषयिणी सङ्गोष्ठी समायोजनीया न तु शिक्षणसंस्थाः पिधातव्याः। अध्यापकैः छात्राः स्वपुत्रसमं द्रष्टव्याः पाठनीयाः, आत्मवदवलोकनीयाः। यथावसरं वादविवादप्रतियोगिता, वाग्विर्धिनसभा, लेखनकलाविष्करणार्थं लेखस्पर्द्धा, शरीरस्वास्थ्यलाभाय क्रीडाप्रतियोगिता, काव्यनिबन्धप्रणयनचातुर्यविकासाय विविधा कार्यक्रमा आयोज्याः। अन्यथा को लाभः पठतां छात्राणाम्। अस्मिन् सर्वकारोऽपि यद्यपि परामृशति तथापि नाध्यापका बहवो यतन्तेऽलसशिरोमणयः। सखे! क्वचित् क्रियमाणोऽपि विद्यार्थिप्रतिभावर्धक–कार्यक्रमस्तु केवलं कृत्रिमो न वास्तविक इति को न जानीते? अतोऽत्र सर्वैरेवास्माभिरध्यापकैर्ध्यानं देयमेव न तु तूष्णीं भाव्यमिति।

नवमी समस्या वृद्धजनभक्तिभावनाभावोऽपि महनीया समस्यास्मदादीनां यत्र वृद्धास्तिरस्क्रियन्ते भिक्षव इव पुत्रपौत्रादिभिः, तृणाय मन्यन्ते गृहवधूभिः, अवकरा इव निक्षिप्यन्ते गृहकोणे आत्मीयजनैरपि, पिपासिता जलं याचमानास्तूष्णींकार्यन्ते,

बुभुक्षिताः किमपि भोजयित्वा तोष्यन्ते, अशक्ताश्चलने यष्टिमभिलषन्तो न लभन्ते दर्शने उपनेत्रं कामयमाना येन केन प्रकारेण हस्तस्पर्शनबलेन पश्यन्ति। बहुभिस्तु स्वार्थिभिरेषां रोगप्रशमनार्थं चिकित्सा व्यर्थमेव भाष्यते। अहो! क्व गता मानवता मानवात्? मित्रवर! वृद्धजनोपेक्षां पश्य, क्वचित्तु पशुक्रेता कश्चित् मारणीयपशुक्रयार्थं प्रस्थितः पुत्रादिभिः स्ववृद्धपितैव पशुरित्यभिहितः, किं चास्ति ममैकः पशुरस्मिन् गेहे इति कृत्वा संकेतितः। क्रेत्रा वृद्धजनो दृष्टो वृद्धजनेनाकारितो विक्रीतोऽहमिति प्रोच्य तेन साकमगच्छत्स्वजनैर्निरुद्ध्यमाणो गतश्च सर्वस्वं भूमिभागं गृहं धनं वा तस्मै स्वाधिकारतया लिखितमकारयत्। क्रेता चाजीवनममूमसेवयदात्मीयं मत्वा।

अन्यदपि शृणु वृत्तान्तं वृद्धजनस्य केनचिदुक्तम्। वित्तोपार्जनार्थं दूरदेशङ्गतस्य कस्यचित् पिता पुत्रवध्वा सेवमानश्श्वसुर एकस्मिन् गृहे निक्षिप्तः कपाटपिधानतया भोजनार्थमादिष्टो यत् बुभुक्षितो घण्टिकां वादयेदन्यथा गृह एव शयितव्यं नाधिकं वक्तव्यं क्वचिदटनीयं वा। नैव व्यर्थं भोजनयाचनातिरिक्तं घण्टिकावादनं करणीयम्। गतेषु ददिवसेषु एकदा न घण्टिकाध्वनिरश्रूयत वध्वा। साचिन्तयदयं सुप्तो वृद्धः कदाचित् सायं वादयिष्यति, सायमपि घण्टिकाध्वनिर्न श्रुतस्तया। पुनः प्रातःकाले खटखटायिते कपाटे नोत्तरमागतम्। तदा कपाटच्छेदनानन्तरन्तु अन्यदेव दृश्यं, असौ श्वसुरो मृतो जात आसीत्। आहूतस्तत्पुत्रः समग्रमपि वृत्तमजानादपृच्छच्च स्वपत्नीं सा घण्टिका कुत्र यया त्वां मत्पिता सूचयस स्म? सावादीत् न दृश्यते क्व गतेति श्रुत्वा सप्तवर्षदेशीयो बालको वृद्धस्य पौत्रोऽवदत् यत्तां घण्टिकामहं स्थापितवानस्मि यदा युवां वृद्धौ भविष्यतस्तदा तदुपयोगं करिष्ये। हन्त भो! हृद्विदारणदारुणकथासौ मर्मस्पर्शिनी।अयि संसरणशीलसंसारासाररसं पीत्वा सरभसमुपनिषद्वचवनं विस्मरसि यत्रोक्तं मातृदेवो भव पितृदेवो भवेति। यो हि त्वामजनयत् यया ते पालनपोषणमभूत्, त्वत्प्रसन्नतायै किं किं नाकरोत्, त्वयि रुग्णे नासावशेत कतिपयानि दिनानि यावत्, न भुक्तवान्, ईशमवन्दताहर्निशम्, चिकित्सको धनादिना प्रसादितः सर्वमसह्यमसहत; स त्वया तर्ज्यते, नैतदुचितं वर्तते। अस्ति कालश्शेषस्सेवस्व सेवनीयवृद्धानन्यथा ते सन्ततिरपि त्वया साकमेवमेव करिष्यति। सत्यमाह शङ्कराचार्यः—यावद्वित्तोपर्जनशक्तस्तावन्निजपरिवारे रक्तः।

वयस्य! न समस्यानामानन्त्यमस्मिन् भारते वर्तते। अन्याश्च समस्या यथा 'मूल्यवृद्धिः, वैज्ञानिकैराग्नेयास्त्रप्रक्षेपणास्त्राणुबमाद्याविष्करणम्, सम्प्रदायवृद्धिः, स्वजनदायभागापहरणं सर्वकारसेवाक्षेत्रे वृत्त्यभावश्चेति चिन्तनीया महत्यः समस्यास्ताडकेव

प्रसारितकरा अवलोक्यन्ते। यदि यथासमयमासामवरोधो न विधास्यते तदावश्यमेव भारतीया दशा दयनीया भविष्यतीति। यद्यपि न यावन्न मानवता जागर्ति न तावत् किमपि देशविषये कर्तुं शक्नोति कश्चिदपि जनः। सर्वो हि वर्गः स्वकर्मपथो दूरं गतो न स्वभावं विमुञ्चति। सत्यमुक्तं केनचिदिदम्—न स्वभावद्वियोजयितुं शक्यते। एको मत्स्यग्राही तडागतटमुपासीनो मत्स्यग्रहणं करोति स्म। तेनैव तडागमार्गेण प्रतिदिनं वणिगेको याति स्म। असावकथयन्मत्स्यग्राहिणं जनं यत् त्वं कियद् द्रव्यं लभसे एकस्मिन् दिवसे? स प्रोक्तवान् विंशतिरुप्यकाणि। वणिगब्रवीत् किं मम गेहे कार्यं करिष्यसि? विंशतिं रुप्यकाणि दास्यामि। स जनः प्रस्तावमिमं स्वीकृत्य वणिग्गृहं प्रतिदिनं मन्त्रजपाय नियुक्तः प्रथमदिवसे सहर्षमजपन्मन्त्रान् करमालां दधानः, द्वितीये दिने येन केन प्रकारेण कदाचित् शिरः कण्डूयमानः कदाचित्पृष्ठं स्पृशन् कदाचिदितस्ततः पश्यन् मन्त्रजपमकरोत्। तृतीये तु दिवसे अनागतं तमवलोक्य वणिक्तमन्वेष्टुं गतः पुनः मत्स्यग्रहणकर्मलीनं साक्षात्कृतवान्। एतादृशमत्स्यग्राही जन इव समस्तो देशवासी न स्वभावादात्मानं मोचयितुमीहते।

अहो! मित्रमुखात् समस्या इमाःसंश्रुत्यसञ्जातोऽस्मि विस्मितः स्वराष्ट्रविकासाय चिन्तनन्ते नूनमेवश्लाधनीय वयस्य! धन्योऽस्मि ते सङ्गमवाप्याहम्। श्रुतवानसि सखे! ब्रूहि शास्त्रगणां विषये मनोगतं किमपि।

अये सन्मित्र! शास्त्रमगणितविषयोपेतं स्वल्पमेवाधीतं यदि श्रोतुमभिलषसि तदा त्वमेव शास्त्रीयं प्रश्नं पृच्छ, यथामति शास्त्रचर्चा कुर्वहे।

पंचमो निश्श्वास:

# शास्त्रवर्णनम्

मित्र! मानवजीवनस्य किं साध्यं? किमर्थं वा जायते जन: संसारे? विमृश्य वक्तव्यम्।

वयस्य! पुरुषार्थो हि मानवजीवनस्य साध्य:, कर्मवशाच्च जीव: कर्मफलं भोक्तुं जनिं लभते। क: पुरुषार्थ:? श्रूयताम्। विश्ववन्द्या भारतीया संस्कृतिरनुपमा यत्र न किमपि निष्प्रयोजनं कल्पितम्। अत्र ऋषिभिश्चिन्तितं यत् किमर्थं पुरुष: प्रयतेत? तस्य जीवनस्य किमुद्देश्यम्? मन्ये इत्येतत्सर्वं विचिन्त्य पुरुषार्था आविष्कृतास्तैरिति।

मानवानां सर्वांगीणविकासाय प्रदिष्ट: पुरुषार्थो जीवने महत्त्वपूर्णं स्थानमधिकरोति। अत उच्यते पुरुषैरर्थ्यते इति पुरुषार्थ:। पुरुषस्यार्थ: पुरुषाय अर्थ इति विग्रहात्मकोऽयं शब्दश्चतुर्थीतत्पुरुषसमासे मन्तुं शक्यते द्विजार्थ इत्यत्र द्विजाय अर्थ इति विग्रहदर्शनात्। अतो विमृश्यते कोऽयं पुरुषार्थ इतिजिज्ञासायां धर्म: अर्थ: कामो मोक्षश्चेति चत्वारो गृह्यन्ते पुरुषार्था:। इदं सर्वं सम्मिल्य पुरुषार्थचतुष्टयमप्युच्यते।यद्यपि विचारितमस्मिन् विषये बहुभिस्तथापि पुन: पुनर्विचारणेन नवीनता विषयावृत्तिश्चेति समुपजायत एवेति मत्वा विमृश्यते। क्रमशो निबन्धेऽस्मिन् पुरुषार्था विचार्यमाणास्सन्ति।

धर्म:—पुरुषार्थचतुष्टये परिगणित: प्रथमतयायं संसारस्य सर्वेषां दार्शनिकानां प्रमुखो व्याख्येयो विषयो वर्तते। अस्यार्थ: कोशग्रन्थे' ध्रियते लोकोऽनेन धरति लोकं वेति स्वीकृत:। एतदतिरिक्तं शब्दोऽयं बहुष्वप्यर्थेषु प्रयुज्यते। यथा—जाति: कर्तव्यम्, सम्प्रदाय:, आचारपालनम्, अध्यादेश:, अनुविधि:, धार्मिकनैतिकगुण:, अधिकार:, न्याय:, पवित्रता, औचित्यम्, शालीनता, निष्पक्षता, स्वभाव:, चरित्रम्, रीतिर्यज्ञो

भक्तिश्चेति। अस्माकं सनातनपरम्परायां आचारग्रन्थो मनुस्मृतिर्यत्र जीवनस्य पूर्णतावाप्तये सदुपदेशो दत्तस्तत्कालीनैः ऋषिभिश्चिन्तकैश्च। मन्ये भारतीयसंस्कृतेराचारसंहितैषा मनुस्मृतिरस्ति। इयं धर्मस्वरूपं ख्यापयन्ती ब्रूते यत् वेदः स्मृतिः सदाचारः आत्मनः प्रियता चेति चत्वार्यपि धर्मस्य प्रत्यक्षतः लक्षणानि सन्ति। यथा—

वेदः स्मृतिः सदाचारः स्वयस्य प्रियमात्मनः।

तच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम्।

सूत्ररूपेण लक्षणमुक्त्वा पुनः दशविधो धर्म इत्युक्तम्। यथा—

धृतिः क्षमा दमोऽस्तेयंशौचमिन्द्रियनिग्रहः।

धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्।।यद्यपि पूर्वोक्तं वेदस्मृतिरिति लक्षणस्यैवात्र व्याख्यानमवाप्यते तथापि विचारयामि यत्तेन व्यष्टिरूपेण समष्टिरूपेणापि धर्मस्य लक्षणं ख्यापितं। लक्षणमिदं विपुलवेदस्मृतिग्रन्थानाम् अध्ययनासामर्थ्यानां बहूनां मनुष्याणां कृते कदाचित् श्रावितं स्यादित्यपि वक्तुं शक्यते। अनेन तु स्पष्टं मन्यते यत् धर्मः गुणपर्यायः। अतो धर्मधर्मिणोः सम्बन्धः समवायो गुणगुणिसम्बन्धवत्।

दर्शनशास्त्रेष्वपि प्रमुखतया धर्मशब्दो विचारितो दर्शनानां मोक्षपुरुषार्थव्याख्यान तत्परत्वादिति। आस्तिकदर्शने परिगणितं मीमांसादर्शनं देवतामुद्दिश्य क्रियमाण द्रव्यत्यागात्मकं यागमेव धर्मपदेन स्वीकरोति। यथा—

यागादिरेव धर्मः ज्ञातव्यमिदं वर्तते यत् स्वाभीष्टसिद्धयै यज्ञयागाः समनुष्ठीयन्ते, यतः कश्चित्स्वर्गमाप्नोति कश्चन साम्राज्यमधिकरोति, अपरः परां सिद्धिमधिगच्छति, मोक्षं विन्दति सर्वं लभते च। अतएव सांख्यदर्शने प्रोक्तं यत्

धर्मेण गमनमूर्ध्वम्

एतत्समानमेव वैशेषिकदर्शनेऽपि सुमतं यदनुष्ठानेन लौकिक—

पारलौकिकी सिद्धिर्जायते, असौ धर्मः। यथा—

यतोऽभ्युदयनिश्श्रेयससिद्धिः स धर्मः। धर्मशब्दस्यापरोऽर्थः करणीयं कर्मापि मन्यते स्वधर्मे निधनं श्रेयः परधर्मो भयावह इति गीतावचनप्रामाण्यात्। किञ्च दुष्टजनविनाशाय प्रयुक्तं छलमपि धर्म एव मन्तव्यः। कालययवनहननार्थं श्रीकृष्णेन बालिवधार्थं श्रीरामेण अश्वथामा हतो नरो वा कुंजर इत्यस्य प्रयो त्रा युधिष्ठिरेण यत्कृतं तत्सर्वएव धर्मः कथं न मन्तव्यः? महाजनो येन गतः स पंथाः इतिवचनश्रवणात्। अतः

सिद्ध—मिदं यत् येन केनापि प्रकारेण संसारे नीतिसदाचारादीनां संस्थापनं भवेत् स एव। धर्म इति स्वीकार्यम्। आकर्ण्यतां वृत्तमिदं—रामायणे मेघनादविमुक्तशक्तिप्रभावमूर्छितं रामानुजं लक्ष्मण।चिकित्सयितुं हनुमता लंकात आनीतो वैद्यः सुषेणो नेच्छति स्वदेशशत्रुपरिज्ञानात्। स तु देशभक्तिधर्मं दर्शयति।अत्र को धर्मः कश्चाधर्म इति सूक्ष्मतया विचार्यते। ब्रवीति श्रीमान् विभीषणो यत् धर्मस्य न कापि एकैव परिभाषा, धर्मपरिभाषा तु देशकालपरिस्थितिसापेक्षा मता शास्त्रचिन्तकैरिति। अतः विभीषणेन वैद्यस्य धर्मः चिकित्सैव मानवमात्रस्येति श्रुत्वा चिकित्सयति सुषेणः। उच्यतां किं धर्मस्य लक्ष्मणं चिकित्सनं तस्य त्यागो वेति? किञ्च रामादिवद्वर्तिव्यं न रावणादिवदित्येव धर्माधर्मलक्षणं मन्मतानुसारमिति।

लोककविना श्रीमता तुलसीदासेन सत्येव कथितं

परहित सरिस धरम नहि भाई।

परपीड़ा सम न हि अधमाही।।

धर्मसारं श्रावयता प्रोक्तं श्रीमद्व्यासेन महाभारते—

श्रूयतां धर्मसर्वस्व।श्रुत्वा चैवावधार्यताम्।

आत्मनः प्रतिकूलानि परेषां न समाचरेत्।।अनेन विमर्शनेन ज्ञायते यत् शास्त्रानुसारि लोकामङ्गलकारि कर्म एव धर्मः तद्विपरीतोऽधर्मो यस्य पालनं सर्वैरेव जनैः करणीयम्। अन्यथा धर्मह्रासे परमेश्वरस्यावतारः। यथा—

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!।

अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्।।

दुष्टं कर्म अधर्मः साधु कृत्यं धर्म इति परिभाष्य सम्प्रति अर्थपुरुषार्थो विविच्यते।

अर्थः—अर्थाभिधानः पुरुषार्थे मानवजीवनस्य महत्त्वपूर्णं स्थानं लभते। यद्यपि अर्थशब्दस्यानेकेऽर्था उद्देश्य—प्रयोजन—धन—भूमिप्रभृतयो वर्तन्ते तथापि अर्थशब्देन द्रव्यं धनं हि गृह्यते। धनहीनो न क्वचिदपि नाद्रियते परिवारे समाजे वेति जानन्ति सर्वे। सम्पूर्णोऽपि संसारो धनाय प्रयतते। अतएव तु ऋग्वेदे श्रीसूक्तमपि दृष्टं मन्त्रद्रष्ट्रा ऋषिणा। यथा—

अश्वदायि धनदायि गोदायि महाधने!।

धनं मे जुषतां देवि सर्वकामांश्च देहि मे।।अर्थाद् धनं प्रधानं जीवने सर्वैरपि मन्यते। विद्यापि धनमेव अतएव तु केनचिन्महापुरुषेण प्रोक्तं–विद्याधनं सर्वधनप्रधानम्। श्रीकृष्णेनापि स्पष्टमुक्तं यथाभिलाषी मां भजते। यथा–

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन!।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ!।।अर्थादर्थकामी जनोऽपि धनलाभायेश्वरं भजमानोऽवलोक्यत एव। महाभारते प्रोक्तमर्थस्य माहात्म्यं यत्–

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्।

उपनिषद्यपि दृष्टं यत् लोभ एतावान् दृढो मनुष्येषु वर्तते यन्न तस्यापसारणं कर्तुं शक्यते केनापि प्रकारेणेति। दशरूप्यकाणि यस्य पार्श्वे स शतमभिलषति, शतं यस्यासौ सहस्रमपेक्षमाणो व्यग्रो दृश्यते। सहस्ररूप्यकाणि यस्य स तु लक्षं कामयते, लक्षपतिरर्बुदमभिवांछति न तस्य धनार्थिनो लिप्सा शाम्यति। अत उक्तं–

न वित्तेन तर्पणीयो मनुष्यः। अर्थहीनो जनो निर्धनो दरिद्रो निगुर्णो हेयश्च मन्यते। निर्धनस्य सङ्गतिं न कश्चित्करोति, सादरं न सम्भषते, न कुशलक्षेममपि पृच्छति, अपराधिजनमिव प्रेक्षते, वस्त्राभूषणशून्यत्वादयं दरिदो जनस्तु क्वचिदपि महोत्सवादिषु प्रस्थितो लज्जते। अतएव दरिद्रता महापातकवद्वर्तते। हन्त! साधु चिन्तितं मृच्छकटिके कविनेदं यत्–

सङ्गं नैव हि कश्चिदस्य कुरुते सम्भाषते नादरात्

सम्प्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते।

दूरादेव महाजनस्य विरहत्यल्पच्छदो लज्जया

मन्ये निर्धनता प्रकामममपरं षष्ठं महापातकम्।।अतः केनचिदुक्तं यत्–यस्यास्ति वित्तं स नरः कुलीनः स एव वक्ता स च दर्शनीयः।

स एव साधुःश्रुतवान् गुणज्ञः सर्वे गुणाः कांचनमाश्रयन्ति।।

अधुना साक्षादवलोक्यत एव संसारे। सर्वशक्तिमानमेरिका यदिच्छति तत्करोति। तस्य एकडालरं भारते षट्षष्टिरूप्यात्मकं मन्यते। ग्रामेष्वपि सभायां यदि गुणवान् द्ररिद्रः किमपि धर्मानुरोधिवचनं वक्तुमिच्छन् मध्य एव तिरस्कारवचनैरवरुध्यते। यतः सत्यमाह कश्चिद् "धनान्यर्जयध्वं धनान्यर्जयध्वमिति।"

श्रूयते हि केनचित्पृष्टे कश्चिदाह ज्ञानी पुरुषो मन्ये महाभारते यत् संसारे सुखं किमिति। तेनोक्तं—

अर्थागमो नित्यमरोगिता च प्रिया च पत्नी मृदुभाषिणी च।

वश्यच पुत्रोऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन्!।।अनेन सुस्पष्टं यद् अर्थः कियान् महत्त्वपूर्णो वर्तते मानवानां कृत इति। अधुना प्रश्नोऽयं यत् धनं केन मागेणार्जनीयम्। तदुच्यते धर्ममार्गेण नाधर्ममागेणेति। जगति अधर्ममागेण धनार्जनं मैव करणीयमतः शास्त्रानुकूलोपब्धसाधनेन अर्जितं धनमेव ऋतं धनमित्युच्यते। अनेनैव धनेन मनुष्यः सन्तुष्टिं लभते। यदुक्तं शास्त्रेषु—सन्निहितसाधनादधिकस्यानुपादित्सा। सत्यमुक्तमपि सन्तोषः परमं सुखम्। किं चाधर्मेणार्जितं धनमनृतं धनं मन्यते। हिंसा चौर्यलुण्ठनापरहणच्छलादि—

विपरीतमार्गेणार्जितं धनं नसुखस्य कारणं भवति। अत्र सर्वदा भीतिरेव दृश्यते। प्रोक्तं केनापि—अन्यायेनोपार्जितं वित्तं दर्शवर्षाणि तिष्ठति। आचार्यमनुनापि कथितं यत्—

अधार्मिको नरो यो हि यस्य चाप्यनृतं धनम्।

हिंसारतिश्च यो नित्यं नेहासौ सुखमेधते। अधर्मणेनार्जितधनेन यद्यपि मानवो वृद्धिमधिगच्छति सुखं च प्राप्नोति परन्तु तत्सर्वं तात्कालिकं क्षणिकमेव न स्थायि, कालान्तरे तु तदेव धनं समूलं तं विनाशयत्येव। यथा—

अधर्मेणैधतेतावत्ततो भद्राणि पश्यति।

ततः सपत्नान् जयति समूलस्तु विनश्यति।।

अतो जनैरस्माभिर्धर्ममार्गेणैव धनमर्जनीयम्। दृश्यते श्रूयते देशेऽस्मदीये भारते यद् बहुभिर्नेतृभिः साधुभिश्च येन केनाधर्मेणार्जितं धनं यद्धि घोटाला—हवालासंज्ञकं निन्द्यमानं वर्तते। एवं प्रकारेणार्थपुरुषार्थो जीवने प्राप्तव्य इति। इदानीं कामपुरुषार्थो व्याख्यायते।

कामः—अस्माकं भारतीयसंस्कृतौ मानवसंततिपरम्परायाः संपालनाय कामः कल्पितः प्रजापतिना। धर्मानुकूलः काम एव कामो भवति नाधर्मप्रेरितः कामो वासनाल्लसितः कामो वेति। यथोक्तं भगवता श्रीकृष्णेन

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ!।

कामशब्द इच्छा—कामनाभिलाष—मैथुन—रतिक्रीडादिषु बहुष्वर्थेषु प्रयुज्यते। सम्पूज्य ईश्वरो येन कामो रचितः। कामाभावे तु सृष्टिविनाश एव संजायेत! आ कृमेः

सम्पूर्णोऽपि जीवो यदि प्रवर्तते तत्र काम एव कारणं नान्यदिति प्रतिज्ञावाक्यम्। परन्तु सत्त्वगुणात्मकः काम एव कामपदवाच्यस्ततोऽन्यत्तु रजोगुणसमुद्भवो मानवस्य वैरी सर्वविनाशकश्च भवति। यथा—काम एषक्रोध एषरजोगुणसमुद्भवः।

महाशनो महापाप्मा विद्ध्येनमिह वैरिणम्।।

अतो रतिसुखमेव कामपदेनाभिधीयत इति कामपदस्यास्ति मुख्यार्थः। प्रजाक्रमरक्षण ाय रतिक्रियावश्यकी मन्यते। परन्तु लोकैस्तु रतिसुखमेव ध्यायते, यद्वशादनर्था भवन्ति।

रतिसुखमेव परमपुरुषार्थं मन्यमानः कश्चिदज्ञो ब्रवीति यत्

अंगनाद्यालिङ्गनादिजन्यं सुखमेव पुरुषार्थः।

मनुस्मृतावपि धर्मविरुद्धकामस्य निन्दा कृता परदारसेवनमपि निन्दितमनायुष्यञ्च मतम्। यथा—परित्येजदर्थकामौ यौ स्यातां धर्मवर्जितौ।

न हीदृशमनायुष्यं लोके किंचन विद्यते।

यादृशंपुरुषस्येह परदारोपसेवनम्।।

साम्प्रतं सर्वत्र देशे विदेशे कामवशगा एव दृश्यन्ते जना यत्र साधवो नेतारश्चान्येऽपि महान्तः पुरुषाः प्रतिदिनं दृष्टिमार्गमधिरोहन्त्येवेति नात्र विस्मयः। अहो कामस्य सामर्थ्यम्। देवानान्तु अयं कामः प्रमुखमस्त्रं मन्यते। यस्य कस्यचित्तपस्विनस्तपो—विनाशाय तैः प्रयुज्यत इति श्रूयते। मेनकयाप्सरसा विश्वामित्रो मुनिः, मत्स्यगन्धया पराशरो महर्षिर्वा कामपाशेनैव धृताः। इमे तु महर्षयो देवैर्महादेवतपोविखण्डनाय कामदेवः प्रेरित इति तु सर्वो जानाति लोकः। इदमेव नापितु समुद्रमंथनाल्लब्धा—मृतापहरणाय श्रीविष्णुना मोहिनीरूपमाविष्कृतं तत्रापि कामपाशवशादेव साफल्यं जातम्। आधुनिकैस्तु विषकन्याप्रयोगेण सर्वं साध्यते साधितं साधयिष्यते च साध्यमित्यहो कामसाम्राज्यम्। वदति नवीनो दार्शनिक ओशो महोदयो यत् यदा साधवो मिलन्ति मया साकन्तदा कीदृषः कामो रतिसुखात्मक इति पृच्छन्ति। स्वपेटिकायां गीतापृष्ठावरणं नियुज्याभ्यन्तरेऽन्यत् स्थापयित्वा भ्रमन्ति हन्त ! महदाश्चर्यमिदं भो! परन्तु यदा मिलन्ति वेश्यास्दा ताभिस्तु कथमस्मात्कुकृत्यान्मुक्तिर्भवेदिति पृच्छ्यते!सत्यमेव कथितं पूज्यपादेन शङ्कराचार्येण

"संसारोऽयमतीव विचित्रः। "

धन्या संस्कृतिर्यत्र कामपुरुषार्थस्य विस्तृतव्याख्यानाय कामसूत्रग्रन्थो विलिखितो श्रीमता वात्स्यायेनेति। आचार्येण कामस्य व्यावहारिकं रूपं दर्शयता विलिखितं

यत् चुम्बनालिङ्गनादिप्रासंगिकैः सुखैस्सह कपोलनितम्बस्तनादिशरीराङ्गानां स्पर्शेन योऽयमानन्दागमः स एव कामः। यथा—

स्पर्शविशेषविषयात्त्वस्याभिमनिकसुखानुविद्धफलवत्यर्थप्रतीतिः प्राधान्यात्कामः।

श्रीमतावात्स्यायनेन कामः शरीरस्याहारो मतः। यथा—

शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः।

अतः कामस्य पालनं सेवनं वा नियमतः सुखकरं श्रेयस्करं च भवति। अनियतरतिसुखलोभेन जनो म्रियतेऽपि। यथा—बहवश्च कामवशगाः सगणा एव विनष्टाः श्रूयन्ते।अत उपनिषद्वचनमनुसृत्य ब्रह्मर्चपालनपूर्वकं सन्तत्युपत्तिः कार्या। यथा—

प्रजातन्तुं मा व्यच्छेत्सीः।

वैयाकरणास्तु परस्त्रीगमनं नोत्सहन्ते। यदि कश्चित् कामी दास्या सह रतिं करोति, रतिकृते द्रव्यं च प्रददाति न तत्र दास्यै प्रयोगः, अपितु तृतीया विभक्तिरेव प्रयोज्या भवति। यथा—

दास्या संयच्छते कामुकः।अयमशिष्टव्यवहारो मन्यते व्याकरणदृष्ट्याः।

प्राचीनकालादेव कामो वासनाया विषयत्वेन दृश्यते। विवाहस्याष्टौ प्रकाराणां श्रवणात्। राक्षसपैशाचादीनामुपलब्धेरिति। रामायणमहाभारतादौ तु बहुभिः कामवशादेवानर्थः कृतः। रावणबालिदुर्योनादीनां कामवशगत्वं सर्वैरपि विज्ञायत एव, यद्वशाद् भयंकरं युद्धं संजातम्। अतोऽनुचितः कामो न विचारणीयः। देशे स्त्रीकन्यापहरणं ताभिः सह बलात्कारश्च प्रतिदिनं समाचारपत्रेषु दूरदर्शनेषु चावाप्यत एवेति नात्र विस्मयः। अत्र केवलं कामस्य वासनाख्यं रूपमिति। हन्त!त्याज्यमिदं पालनीयं ब्रह्चर्यव्रतं तत एव कामपुरुषार्थस्य सार्थक्यम्। कामपुरुषार्थमुक्त्वान्तिमं मोक्षाख्यं पुरुषार्थं वच्मि।

मोक्षः—मोक्षशब्दः मुक्तिः कैवल्यं मोचनमित्यर्थमपि विवृणोति। प्रश्नो जागर्ति यत्कस्मान्मुक्तिः? तदुच्यते बन्धनात्। पुनः कस्माद् बन्धनादिति? सांसारिकबन्धनान्मोक्षणं मोक्षः। पुनः प्रश्नः, सांसारिको बन्धः कः? तदा समाधीयते यत् पत्नीपुत्रबन्धुरूपात्मको यः सम्बन्धः स एव बन्धः। तस्मान्मोक्षः। इदं वस्तु मम, इदं तव, इदं तस्येति भाव एव बन्धः। अत्र ममत्वादिर्दृढो यो भावः सोऽसाधारणो बन्धः। अतः नेदं मम तवेति मत्वा यत्क्रियते कर्म निष्कामभावनया तत्र न बन्धो भवति। अस्मादेव कारणादुक्तं यद् भो मानवाः! त्यागपूर्वकं कर्म कुर्वन्तः शतं वर्षाणि यावज्जीवितुमिच्छथ। कस्यचिद्धने

लोभं मा कुरुत। एवं प्रकारेण कृतेन कर्मणा बन्धो न भविष्यति। यथा—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः।

एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।

अय।सर्वश्रेष्ठः पुरुषार्थः यत्प्राप्त्यै मुनयो महर्षय ऋषयो देवा अपि व्याकुला दृश्यन्ते। बन्धनस्य कारणमज्ञानमस्ति। अज्ञानमेवाविद्यापदवाच्यं मन्यते। यया जीवो बद्धो भवति। इयमविद्या अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरस्ति। अर्थादविद्याकारणादेवानित्येषु पदार्थेषु नित्यता दुःखात्मकेषु सुखम् अनात्मसु आत्मत्वम्, अशुचिषु शुचिता जनैर्दृश्यते। अतो बद्धयते। अज्ञानात्कृतं कर्म त्रिप्रकारकं भवति। संचितं क्रियमाणं प्रारब्धं चेति। सति ज्ञाने समग्रमपि कर्माभोगः क्षीयत एव। यथोक्तं—

क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे।

सांख्यदर्शनं प्रकृतिपुरुषात्मकं यस्य मतं यत् प्रकृतिरेव बन्धनं गच्छति न पुरुषः। यथा—बध्यते मुच्यते च नानाश्रया प्रकृतिः।

यद्यपि भौतिकवादी चार्वाको मरणमेव मोक्षं ब्रवीति। यथा—देहच्छेदो मोक्षः। बौद्धा रागादिज्ञानसन्तानवासनोच्छेदानन्तरं मोक्षं भाषन्ते। जैनास्तुमिथ्यादर्शनादीनां बन्धहेतूनां निरोधेऽभिनवकर्माभावात् निर्जराहेतुन्निधानेनार्जितस्य कर्मणो निरसनात्यन्तिमोक्षणं मोक्षं वदन्ति। नैयायिकस्तु जननिरोधमेव मोक्षं स्वीकरोति। यथा—तदत्यन्तविमोक्षोऽपवर्गः। अयं मोक्षो द्विविधो मतो जीवन्मुक्तिर्विदेहमुक्तिश्च। यदि कश्चिज्जीवन्नेव मोक्षमनुभवति निष्कामकर्मानुष्ठानेन तदा जीवन्मुक्तिः। परन्तु प्रारब्धकर्मनाशानन्तरं देहपाते सति विदेहमुक्तिर्जायते। अस्यैव मुक्त्यै सर्वोऽपि जीवो व्याकुलो दृश्यते बन्धगतोऽज इव संसारे। कश्चिदीश्वरं स्मरति भजते वा। अत उक्तंमोक्षाय भजते हरिम्। श्रीमद्भगवद्गीतायान्तु भगवान् श्रीकृष्णो वक्ति यत् मानवः स्वकर्मानुष्ठानेन सिद्धिं मोक्षाख्यां प्राप्नोति। यथा—स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। किञ्च स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।अतः न कस्यचिच्छास्त्रस्यावश्यकता मोक्षालाभाय अपितु शास्त्रानुकूलकर्माचरणमेव मोक्षं प्रयच्छति। एवं प्रकारेण यथामतिः पुरुषार्थचतुष्टयं मया संक्षेपत उपस्थापितं विजानतां पुनरावृत्तये अजानतां ज्ञानायेति।

अये सुहृद्वर! नारीणां संस्कृतसाहित्ये स्वातन्त्र्यं पारतन्त्र्यं वा? समयगुच्यताम्।

आकर्णय विद्वन्!

कथ्यते यत् संस्कृतं मानवजीवनस्य सर्वविधविकासाय सर्वं सुकरं श्रेयस्करं मार्गं विवृणोति। बहुभिस्तु भाषेयं विश्वस्य सर्वप्राचीनेति समुद्घोष्यते किञ्चोच्यते यदस्मादेव संस्कृतात्सर्वं निस्सृतमस्ति। अत्र किं साधु किं चासाधु इति भगवान् भास्कर एव जानाति न मादृशोऽज्ञानान्धः कश्चिदिति प्रतिजाने। यद्यपि भाषाणां संस्कृतीनां च भूयसी संख्या देशे देशान्तरे च राराजते। तत्र साम्यं वैषम्यमपि प्रचुरतयावलोक्यत एव। तथापि विचारणीयविषयेषु बहुषु सर्वत्र दृश्यते समानता यथा अस्पृश्यता नारीदासता चेति। अतो मतिरेषास्मदीया भ्रान्तिमुपयातीव सततं विचारयितुं प्रोत्साहयति च यत् कुत इदमनौचित्यं विश्वस्मिन् समागतम्? चिन्त्यताम् पुरा अमेरिकादिदेशेष्वपि अस्पृश्यताया निवारणार्थं नारीविकासार्थं चान्दोलनं तत्कालीनसमाजसुधारकैराविष्कृतमिति। अतः प्रतिभाति यदेकस्मादेव स्थानात् निर्गतो मानववर्गः यत्र कुत्रापि प्रस्थितस्तत्र–तत्र जलवायुप्रभावात् भाषाणां परिवर्तनं तु स्वयमेव संजातं, किन्तु संस्कृतीनां संस्काराणां च परिवर्तनं न जातमिति विभावयामि।

अस्तु वेदाः अस्माकं भारतीयसंस्कृतेः सर्वं रूपं प्रकटयन्त्येवेति नास्ति संशयः। एभ्यः पर्वं किं रचितमासीदिति नोपलभ्यते। अत इम एव प्रमाणभूता मन्यन्ताम्। एतत्कालीना संस्कृतिरेव विश्वस्य प्रथमा संस्कृतिरिति मन्यते। यथोक्तं वेदे—

या संस्कृतिः प्रथमा विश्ववारा अत्र विशेषरूपेण वयं नारीविषये व्याख्यास्यामः। ध्यानं दीयताम्। नासदीयसूक्तं सृष्टेः प्राक् किमासीददिति समालोचयति। पुरुषसूक्तानुसारं जीवादिसृष्टिरभूदिति ज्ञायते। अत्र द्विपदश्चतुष्पदः अश्वाः अजा इति समजायन्त। परन्तु नात्र चिन्तितं यत् नारीपुरुषयोः कः श्रेष्ठः?

मनुस्मृतावपि नारीपुरुषसृष्टिविषये यच्चिन्तितं तदवलोक्यतामिदं वचनम्—

द्विधा कृत्वात्मनो देहमर्धेन पुरुषोऽभवत्।

अर्धेन नारी तस्यां स विराजमसृजत्प्रभुः॥

अत्र मूकोऽपि ज्ञास्यति यत् नारीपुरुषयोरभेदो नैव स्रष्ट्रा कृतम्। यदि समानोत्पत्तिरुभयोरनयोस्दा कथमनयोरेकस्य प्रधानता? केनैषोऽधिकारो दत्तः? इति प्रश्नो मानसं विकलयति।

अधुना विचार्यते कुतो नारीपुरुषयोर्भेदारम्भोऽभूत्? अयि विचारकाः! इदन्तु सत्यमेव यद्वैदिककालेष्वेव नारी भोगविषयो मतः। अन्यथा नासां कृते विपरीतमतिना केनचिदृषिणा मन्त्रोऽद्रक्ष्यत। मन्त्र एष प्रमाणम्—

उत त्वः पश्यन् न ददर्श वाचं उत त्वः शृण्वन्नशृणोत्येनाम्।

उतो त्वस्मै तन्वंविसस्रे जायेव पत्य उशती सुवासाः।।

मुख्योऽंशो विचारणीयश्चतुर्थपादो येन नारी पतिकृते निजवस्त्राण्यपसारयत्येवेति दर्शितः। अन्योऽपि दृष्टान्तो भवितुमर्हति। कथमत्र नार्य एव दृष्टान्तः? यदि नारीविषयिणी दूषिता दृष्टिर्नैषा तदा कथं यमयमीसंवादसूक्तेस्वसुः भ्रात्रा साकं संवादमुपस्थाप्य प्रथमतः नारीणामुपहासः कृत इति लभ्यते। इदमेव परगृहे कन्यानां विवाहो विधातव्य इति सूचयति। इतोऽग्रे चिन्तनीयं किञ्चित्। कथं नारी यमी एव अत्र कामासक्ता दर्शिता? यमो न कथमिति चिन्तनीयो विषयो मद्दृष्ट्या। कथं कन्या एव परगृहे विवाह्येत? कथन्न वरः स्वगृहं विहाय विवाहान्ते कन्यागृहमाश्रयेत्? अस्मिन् विचारणीये विषये कथं मौनिताचार्याणां नारीशोषणविधानविधायकानाम्? अहमनुमिनोमि यदस्माद्वैदिककालादपि पूर्वं समाज आसीत्कश्चिद् यत्र नारीपुरुषयोर्न कश्चिद् भेद आसीत्। यतोहि ईश्वर यदि जीवनरथस्य संचालनार्थं चक्रद्वयं नारीपुरुषरूपं निर्माय सृष्टिं प्रससार तथा कुतः पुरुषस्यैव प्रधानता समागता? अतः स्पष्टमिदमज्ञायतेति यत् वैदिककालीनः समाजः पूर्णरूपेण पुरुषसत्तात्मक आसीत्।

मान्याः! वेदमादर्शं मत्वा रचितः समग्रोऽपि सनातनाख्याः मनुस्मृत्यादयो ग्रन्था तत्प्रभावप्रभाविता एव मीयन्ते। यस्मात्सर्वत्र नारीणां नियमनं पारतन्त्र्यञ्च प्रचुरतया प्राप्यते। अस्मादेव हेतो रामायणमहाभारतभागवतादिग्रन्थरत्नेषु नारीणां ह्रास एवावलोकितः। तदाधृत्य महाकविप्रणीतशाकुन्तलादिकाव्यग्रन्थेष्वपि तथैव नारीरूपमालिखितमिति लभ्यते। मनुस्मृतौ तु विवाहप्रकारव्याख्यानेनैव अन्धोऽपि विज्ञातुं शक्नोति यत् कीदृशी दशा नारीणां तदानीमासीदिति? सिंहावलोकनन्यायेनावलोक्यता—मिदं वाक्यं तावत्—अत्र ब्राह्मो दैवस्तथा चार्षः प्राजापत्यः आसुरः पैशाचः राक्षसः गान्धर्वश्चेति विवाहाः कथं कल्पिताः? अनेन केवलं नारीणां पारतन्त्र्यमेव विमृश्यते। रुदतीं कन्यामहृत्य बली विवाहं करोति स्म। हा हन्त! कीदृशः स दुराचारी समाजो यत्र नार्यो नाद्रियन्ते। अपितु एवंरूपेण तिरस्क्रियन्ते। बहुधा गोपायतापि मनुस्मृतिकारेण नारीदशा चित्रितैव। कदाचिन्नार्यो न भवेयुः कुपिता इति मत्वा—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता इति लिखितं स्यात्।

स्वयंवरोऽपि विवाहात्प्राक् क्रियमाणो वरनिश्चायकः पराक्रमसूचककार्यक्रमः, किन्तु बहुभिरनर्थः क्रियते स्वयंवरे—यथा सीतास्वयंवरे यो हि शिवधनुर्हस्तयोरुत्थापयति तस्मै

सीता दास्यते इत्यपि न वरं मन्ये। अत्र न कथं वयश्चिन्तितम्, कश्चिदपि धनुरुत्थापयितुं शक्नुयात्! इदन्तु विस्मयं तनोति महाशयाः! रावणादीनामुपस्थितेर्यदि वृद्धो वा प्रौढ़ो वा कश्चिदपि स्वयंवरनियमान् पालयति चेत्तस्मै दास्यते कुमारी जानकीति। महाभारते द्रौपदीस्स्वयंवरोऽपि नारीदशां स्पष्टयति नृत्यन्मत्स्यनेत्रगोलकभेदनं कठिनमाभाति। मन्यतामिदन्तु कौतुकविषयावृतं वृत्तम्। अत्र नाम तु स्वयंवर इति परन्तु कार्यं नियमाधीनं, स्वयंवरपदस्य सार्थक्यं यत्र कन्या स्वयमेव वृणोति वरम्। दमयन्तीस्वयंवरः साधु, यत्र न कशिचन्नियमो दृष्टः सीताद्रौपदीस्वयंवरवत्। यद्यत्र वयोनिर्धारणं नासीत्तत्तु नारीणामेव परतन्त्रतां दर्शयति। अतो वक्तुं शक्यते यत् रामायणकालेऽपि नारी न पूर्णतः स्वतन्त्रतामनुभवति स्मेति। अस्य प्रबलं प्रमाणमन्यदपि वर्तते। रामो यदा सीतायाः पाणिं गृह्णाति तदानीं ब्रवीति महाराजो जनको यत्–

अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम्।
इयं सीता मम सुतासहधर्मचरी तव।।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना।
पतिव्रता महाभागा छायेवानुगता सदा।।

अत्र पतिव्रता छायेवानुगता सदा इति सुस्पष्टमेव नारीणां पुरुषाधीनत्वं दर्शयति। अन्यथा जनकेन वक्तव्यमासीत् यत्–

पत्नीव्रत महाभाग छायेवानुगत प्रिय। नेदमेवापि राजा जनको कन्याशतं दत्तवानित्यपि प्राप्यत एव। यथा–

ददौ कन्याशतं तासां दासीदासमनुत्तमम्।।परन्तु नात्र वधूपदेशस्तेन राज्ञा जनकेनादीयतास्यायिति दृश्यते। किञ्च महाभागवतपुराणेऽपि कर्दमदेवहूतिविवाहप्रसङ्गे नैव वधूपदेशश्श्रुतः श्रावितः। यथा–

शतरूपा महाराज्ञी पारिबर्हान्महाधनान्।
दम्पत्योः पर्यदात्प्रीत्या भूषावासः परिच्छदाम्।।
प्रत्तां दुहितरंसम्राट्सदृक्षाय गतव्यथः।
उपगुह्य चबाहुभ्यामौत्कण्ठ्योन्मथिताशयः।।

अशक्नुवंस्तद्विरहं मुञ्चन् वाष्पकलां मुहुः।

आसिञ्चदम्ब वत्सेति नेत्रोदौर्दुहितुः शिखा।।

अनेन प्रतीयते यत् प्राक्काले नैव कन्याया विदापनकाले मात्रा पित्रा ज्ञातिजनेन केनचिद्वोपदेशो दीयते स्मेति निश्चितमेव द्रष्टुं शक्नोत्यन्धोऽपि जनः। किन्तु सत्यमाभाति यन्महाभारतोत्तररचनायां वधूपदेशः कविभिः श्रावितो येन तात्कालिकी सामाजिकी दशा नारीपारतन्त्र्यञ्च स्वयमेव प्रत्यक्षमुत्तिष्ठतः।

मान्याः महाकविकालिदासविरचितेऽभिज्ञानशाकुन्तले प्रेष्यमाणा शकुन्तला महर्षिणा कण्वेन विविधवचोभिः सम्बोध्यते। किं पतिकुले त्वया कर्तव्यमिति। वदति कण्वो मुनिर्यत् शकुन्तले! त्वं पतिगृहं गत्वा गुरुजनान् सेवस्व, तेषां सर्वमपि कथित मवधारयेति भावः, दुष्यन्तस्य अनेकाः पत्न्यस्ताभिस्सह सखीव्यवहारो कर्त्तव्यस्त्वया, यदि पतिस्ते त्वयि भवेत् क्रुद्धा चेन्न त्वं विपरीतमाचर, सौभाग्यवती सती कदापि सेवकजनेषु स्नेहो दर्शयितव्यः। यद्येवं भवसि चेद्भारतीया नारी एतदन्यथा तु कुलस्य व्याधिरूपासि। स्पष्टं परिज्ञायत एव यन्नारीणां स्थितिर्न समीचीना अपितु दुःखदमेवासीत्। किञ्च पुरुषप्रधानसमाजो न नारीं सन्मायनयति स्म। एकः पुरुषो बहुपत्नीप्रियो भूत्वा जीवितुमीहते स्म। अतएव तस्य अनेकाः पत्न्यश्श्रूयन्ते। विचार्यतां किमिदं शोभनं नारीणां कृते सुखकरं वा? सत्यमिदं प्रकटीभवति यन्महिलाजनस्य न समुचितोऽ—धिकारस्तदानीमासीदिति कथं पतिर्यद्वदिष्यति यत्तदेवानुपालनीयं पत्न्येति? इदन्तु प्रत्यक्षमेव नारीपीडनं नारीपारतन्त्र्यं मन्यताम्!यथा—शुश्रूषस्व गुरुन् कुरु प्रियसखीवृत्तिं सपत्नीजने

भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः।

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी

यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः।।

एतन्मतानुसारिभिर्बहुभिरेव कविभिवधूपदेशः काव्येषु प्रदत्तो येन नारीपारतन्त्र्यं दृश्यते। यथा—विख्याते नैषधीयचरिते दमयन्तीं पतिगृहगमनतत्परां सदुपदिशन् राजा भीमो न्यगादीत् यत् भो पुत्रि! दमयन्ति! पुण्यं पिता, सहनशक्तयः आपत्तिविनाशिकाः, मनस्सन्तुष्टिरेव धनं किञ्च सर्वस्वो नलस्तवेति ज्ञायताम्। नातःपरं ते कश्चिदस्ति। अनेनापि नैषधीयेन पद्येन नारीणां तात्कालिकी स्थितिरभिसूच्यते। अत्र तु दासता प्रकटीभवति महिलाजनस्य! तद्यत्————

पितात्मनः पुण्यमनापदः क्षमा धनं मनस्तुष्टिरथाखिलं नलः।

अतः परं पुत्रि! न कोऽपि तेऽहमित्युदश्रुरेष व्यसृजन्निजौरसमाम्।।

कविचन्द्रशेखरप्रणीते सुर्जनचरितमहाकाव्ये कनकावतीविदापनकाले तन्मात्रा सदुपदेशो दीयते। यदधोलिख्यमानमस्ति। अत्रापि कविः महाकविकालिदासगिरा भाषमाणोऽवलोकितः। एतेषां पद्यानामाशयं सरलं यमल्पज्ञोऽपि विज्ञातुं प्रभवति। चिन्त्यतां किमुक्तं कविना। स वक्ति यत् पतिः कीदृशमपि वाक्यं कथयेत्, क्रुद्धो भवेत्, तथापि त्वं तु दीनवद् वचं वदिष्यसि। सर्वथा पतिहितकामनात्मकमेव कार्यं करिष्यसि। मर्मस्पृशापि वाण्या प्रपीडिता त्वं न कदापि पतिजनं पीडयेः। कथमिदं केवलं नारीणां कृते? किं पुरुषः सर्वमुचितमेव कुरुते? अस्य विषयेऽपि लेखनीयमासीत्। किन्तु पुरुषसत्तात्मकः समाजो महिलां भोगविषयां मनुते। अतएव सर्वत्र मुखरतया नारीणां कृत एव श्राविताः उपदेशाः तासां पराधीनतां सूचयन्ति।

चेष्टाभिरिष्टाभिरुदारभाषितैरकृत्रिमप्रेमपवित्रया धिया।

सर्वास्ववस्थास्वपि सर्वतोमुखी विर्वधनीया दयितेऽनुकूलताम्।।

पत्यौ प्रतीपेऽपि तिरोहिव्यथहिताय तस्य हितमनसा भव।

विरुद्धभाषिण्यपि तत्र सत्रपा कृपानिदानं वद दैन्यवद् वचः।।

ईर्ष्यातिरेकोत्थिततर्कविभ्रमान् न चानुसन्धेयममुष्य दूषणम्।

मा श्रद्दधीथाः श्रुतमप्युपेक्षया प्रतीमप्यात्मतुदं विदूरय।।

मर्मस्पृशाप्यन्य गिरा निपीडिता न पीडयेस्तं प्रतिकूलचेष्टितैः।

पत्युः प्रसादातिशयेऽपि पुत्रिके! न लंघनीयो विनयोचितक्रमः।।

हन्त! पुरुषैः स्वस्वलघुलघुकार्यसम्पादनेऽपि नारीणामपलापः कृतः। यथा व्याकरणे प्रथमपुरुषमध्यमपुरुषोत्तमपुरुष इत्यपि पुरुषाणां नारीं प्रति का दृष्टिरिति विवेचयत्येव। नात्रैवविरमति पुरुषवर्गः, अवलोक्यतां कामसूत्रं यत्र महर्षिणा वात्स्यायेन किं कथितम्। असौ महाशयस्तु नारीं वस्तुमात्रं मन्यते। यदेकचारिणी स्त्री पत्यौ दृढविश्वासपूर्वकं तं देवतुल्यं मन्यमाना तदनुकूलमाचरेत्। सा पतिमतानुसारं कुटुम्बभारमपि संवहेत्। गृहं शुचि शोभनं च स्थापयेत्। यथा—भार्या एकचारिणी रूढविश्रम्भा देववत् पतिमनुवर्तेत। तन्मतेन कुटुम्बचिन्तामात्मनि सन्निवेशयेत्। वेश्म शुचि

यद्यपि महाभारते प्रोक्तं यत् सपत्नीकः पुरुष एव क्रियाशीलो भवति, स एव गृहस्थ तस्यैव जीवनमामोदप्रमोदप्रपूरितंस एव समृद्ध इति। तद्यत्–

भार्यावन्तः क्रियावन्तः सभार्याः गृहमेधिनः।

भार्यावन्तः प्रमोदन्ते भार्यावन्तः श्रियान्विताः।।

एवंरूपा महिला कथं विवाहात्प्राक् स्वपितुर्गृहे निक्षिप्तवस्तु इव संरक्ष्यतामिति निर्दिशन्ति बहवः? महाकविकालिदास एव प्रावदत्–

अर्थो हि कन्या परकीय एव

तामद्य सम्प्रेष्य परिग्रहीतुः।

जातो ममायं विशदः प्रकामं

प्रत्यर्पितन्यास इवान्तरात्मा।।

अयि महानुभावाः! मदीयोऽयमेव विमर्शो यत् कथं महिलानां ताडनं कश्चित् साधयति ?

ढोल गवांर शूद्र पशु नारी ये सब ताडन के अधिकारी।रामचरितमानसाख्यो ग्रन्थस्तुलसीदासेन षोडशशताब्द्यां लिखितः। मन्यते वाल्मीकिरामायणस्य अवधीभाषायां पद्यानुवाद एव तेन व्यधायि। प्रसङ्ग एष वाल्मीकिरामायणे नैव प्राप्यते। एतेन प्रतिभाति यत् रामायणकाले नार्यो न ताडनार्हा आसन्। आधुनिके कलौ युगे दुर्मतिः पुरुषोऽत्याचारमकरोन्नारीषु तद्वशादेव कविना केनचिन्नारीशत्रुणा वा कदाचित् कथितं स्यात् किं वा नैतस्य चतुष्पादाख्यस्यावश्यकता तत्र, इदं प्रक्षिप्तमपि मन्तुं शक्यते वाल्मीकिरामायणेऽप्राप्तत्वादिति। परन्तु यस्मिन् कस्मिन् काले नारीषु अत्याचारः कृतः तत्कालस्य दशा साहित्ये स्वयमेव वर्णिता भवति। इत्थं मयास्मिन् निबन्धे साधितं यन्नारीणां स्थितिर्न समीचीना, ताभिस्सह अत्याचार एव पुरुषैः कृतः क्रियते करिष्यते चेति। हन्त! कदा नार्यो भविष्यन्ति भारते विश्वे वा पूजनीया इति विचिन्त्य खिन्नं मे मनस्तासां कल्याणाय सततं परमेश्वरं प्रार्थयते।

अये भवांस्तु दार्शनिक इव संभाषते किमपि दर्शनं पठितं भवता तस्य प्रमेयपदार्था उच्यन्ताम्।

आं पठितं सांख्यं नामादिमं दर्शनं तत्प्रमेयं कर्णीकुरु।

साङ्ख्यदर्शनं भारतीयदर्शनपरम्परायामादिमं दर्शनमस्ति यस्य प्रशंसनं न केवलं भारतीयैरेव दार्शनिकैरपितु पाश्चात्यैरपि मुक्तकण्ठेन क्रियत एवेति दृश्यते। अस्य प्रवर्तको महर्षिकपिल आदिविद्वान् स्वीकृतोऽस्ति। यद्यपि विदन्ति तत्त्वविदो यत् साङ्ख्ये प्रकृतिमहदहङ्कार–पंचतन्मात्र–पंचमहाभूतदशेन्द्रियाणां मनसः पुरुषस्य च दर्शनात् पंचविंशतितत्त्वान्येव यानि व्यक्ताव्यक्तज्ञरूपाणि तान्येव प्रमेयरूपत्वेन परिज्ञायन्ते तथापि क्वचित् क्वचित् षष्टितन्त्रमभिधानमपि प्राप्यते यस्माद् भवति संशयो यत् कियन्तो वर्तन्ते प्रमेयपदार्थाः साङ्ख्ये? एतज्जिज्ञासापरिशमनार्थमेव निबन्धोऽयं मया व्यरचि। षष्टितन्त्रं नाम साङ्ख्यकारिकायां प्राप्यते तद्यत्–

सप्तत्यां किल येऽर्थास्तेऽर्थाः कृत्स्नस्य षष्टितन्त्रस्य।

आख्यायिकाविरहिताःपरवादविवर्जिताश्चापि।।

इदमेवावलोक्य समुत्तिष्ठति प्रश्नोऽयं यत्किं नाम षष्टितन्त्रमिति? किं चासीत्कश्चिद्ग्रन्थः साङ्ख्यकारिकातः पूर्वं यत्र काश्चन आख्यायिका आसन्, अथ च साङ्ख्येतरदर्शनसिद्धान्तखण्डनमपि तत्र कृतमासीत्? साङ्ख्यदर्शने वर्तमानसमये एतादृश एक एव साङ्ख्यसूत्रनामा ग्रन्थो विलोक्यते यत्र षोडशाख्यायिकाभिस्सह चार्वा–कादीनां मतनिरसनमपि विहितमस्ति। परन्त्वात्रापि साङ्ख्यप्रमेय–पदार्थाः न षष्टितन्त्राभिधानाः। अत्र तु–

सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पंचतन्मात्राण्युभयमिन्द्रियं तन्मात्रेभ्यस्स्थूलभूतानि पुरुष इति पंचविंशतिर्गणः

इत्थमेव साङ्ख्यकारिकायमपि प्रमेयपदार्था वर्णिताः। यथा–

प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।

तस्मादपि षोडशकात् पंचभ्यः पंचभूतानि।।

एतावता मया प्रकृत्यादीनां पंचविंशतिपदार्थानां प्रमेयत्वमुदाहृतम्, अधुना षष्टितन्त्रमालोच्यते।

षष्टितन्त्रस्योल्लेखः श्रीमद्वाचस्पतिमिश्रेण साङ्ख्यतत्त्वकौमुद्या अन्ते राजवर्तिकनाम्ना कृतः। तद्यत्–

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता।

पारार्थ्यं च तथानैक्यं वियोगो योग एव च।। .

शेषवृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।

विपर्ययः पंचविधस्तथोक्ता नवतुष्टयः।।

करणानामसामर्थ्यमष्टाविंशतिधा स्मृतम्।

इति षष्टिपदार्थानामष्टाभिः सह सिद्धिभिः।।

इदं षष्टितन्त्रं युक्तिदीपिकाया आरम्भ एव प्रमेयत्वेन वर्णितमवाप्यते। अत्र मङ्गलाचरणानन्तरं ग्रन्थकृता प्रोच्यते यत्—

शिष्यैर्दुरवगाहास्ते तत्त्वार्थभ्रान्तबुद्धिभिः।

तस्मादीश्वरकृष्णेन संक्षिप्तार्थमिदं कृतम्।।

सप्तत्याख्यं प्रकरणं सकलं शास्त्रमेव वा।

यस्मात्सर्वपदार्थानामिह व्याख्या करिष्यते।।

प्रधानास्तित्वमेकत्वमर्थवत्त्वमथान्यता

पारार्थ्यं च तथानैक्यं वियोगो योग एव च।।

शेषबृत्तिरकर्तृत्वं मौलिकार्थाः स्मृता दश।

विपर्ययः पंचविधस्तथोक्ता नवतुष्टयः।।

करणानामसामर्थ्यमष्टाविंशतितधा स्मृतम्।

इति षष्टिपदार्थानामष्टाभिः सह सिद्धिभिः।।

अर्थात् प्रधानस्यास्तित्वम्, एकत्वम्, अर्थवत्त्वम्, अन्यता भेदो वा, परार्थत्वम्, पुरुषस्यानेकत्वम्, वियोगः, योगः, शेषवृत्तिः, पुरुषाकर्तृत्वम् एते दश मूलिकार्थपदवाच्याः पदार्थाः। किञ्च पंच विपर्ययाः, नव तुष्टयः, अष्टाविंशतिरशक्तयः, अष्टौ सिद्धयश्च सम्मिल्य भवन्ति षष्टिपदार्थाःयेषामभिधानमस्ति षष्टितन्त्रमिति। विचार्यते यदिमानि तन्त्राणि पंचविंशतितत्त्वेष्वेव अन्तर्भवन्ति पृथग्वा स्वसत्तां स्थापयन्ति। श्रीमन्मिश्रेण वाचस्पतिना तत्त्वकौमुद्यां स्पष्टीकृतं यत्—

एकत्वमर्थवत्वं पारार्थ्यं च प्रधानमधिकृत्योक्तम्, अन्यत्वमकर्तृत्वं बहुत्वं चेति पुरुषमधिकृत्य। अस्तित्वं, वियोगो योगश्चेत्युभयमधिकृत्य, वृत्तिः स्थितिरिति स्थूलसूक्ष्ममधिकृत्य।

अस्यां दशायामहं संशयापन्नोऽन्वेषयामि सङ्गतिं यया यथार्थप्रमेयनिर्णयो भवेत्। मान्याः यदि वाचस्पतिमिश्रमहानुभावस्य कथनं स्वीक्रियेत तथापि दश मूलिकार्थाः प्रकृतिपुरुषयोरेवान्तर्भवन्ति। न तत्र महदहङ्कारतन्मात्रदशेन्द्रियमनोमहाभूतानां परिगणनं कृतमिति विभाव्य किञ्च विपर्ययाशक्ति–तुष्टिसिद्धिग्रहणाद् विस्मयमातनोति मानसम्।

युक्तिदीपिकायाः साङ्ख्यतत्त्वकौमुद्यां प्रभाव इतिशीर्षकेण शोधनिबन्धेन मया साधितमस्ति यत् युक्तिदीपिका पूर्ववर्तिनी कौमुदीतः। अतः सिद्धमिदं कौमुदीकारेण षष्टितन्त्रमितिनाम्ना यद् वर्णितं तद् युक्तिदीपिकायाः एव गृहीतोऽंशस्तत्र च षष्टितन्त्रस्येव साङ्ख्यप्रमेयत्वं समुद्घोषितमेव मां प्रमेयनिर्णयाय प्रैरयदिति सत्यं वच्मि।

अत्र संशय एष एव यत् कथमाचार्येणाज्ञातनाम्ना युक्तिदीपिकायां षष्टितन्त्रमिति कृत्वा साङ्ख्यकारिकाया व्याख्यानमक्रियत। किं प्रकृत्यादिपंचविंशतितत्त्वान्येव षष्टितन्त्रेण बोध्यन्ते वा किमप्यपरं तत्त्वं सूच्यते? मन्मत्यनुसारमत्र साङ्ख्ये प्रमेयनिर्णयो न सरलो विषयोऽपितु जटिल एवास्ति। षष्टितन्त्रे विभिन्नावन्तरप्रमेया नामुप–ादानत्वात् पंचविशतितत्त्वापेक्षयेति। यद्यपि कश्चिद् ब्रूयात् यत् षष्टितन्त्रमेव प्रमेयत्वेन गृह्यतां तदा तु–

पंचविशतितत्त्वज्ञो यत्र कुत्राश्रमे वसेत्।

जटी मुण्डी शिखी वापि मुच्यते नात्र संशयः।।

इत्यनेन पद्येन पंचविशतिप्रमेयानामप्रमेयत्वमुत्पपद्येतेति मत्वा विमृश्यते विषयोऽयम्। परन्तु अयि मान्याः! युक्तिदीपिकाकारोऽपि भ्रामयति न निर्णयं गमयति। तेनोच्यते 'यथाक्रमं लक्षणतः कात्स्नर्येनेहाभिधास्यते।' इत्थं प्रतिज्ञायापि न तत्प्रथमं परिभाषते। तन्त्रगुणानिति विषयमवलम्ब्य व्याख्येयविषयाद् भवति पृथगिति लक्षितम्। तेन पूर्वं षष्टितन्त्रस्य व्याख्यानं करणीयमासीत्। न तथा कृतम्। किञ्च तन्त्रगुणान् परिभाष्य चातुर्येण कारिकाया एव व्याख्यानमारब्धम्। अहो विलक्षणां शास्त्रवृत्तिभाष्यकाराणां गतिर्मतिर्वा। अस्यां दशायां पंचविंशतिपदार्था एव साङ्ख्यप्रमेयपदमधिरोहन्ति। त एव पदार्था मया अनुविषयमिहोपस्थाप्यते।

१ प्रकृतिः–साङ्ख्ये प्रकृतिरेव प्रमुखमस्ति तत्त्वं यतो निस्सरन्ति महदादीनि व्यक्ततत्त्वानि, यथोक्तं पूर्वमेव मया। जगतो मूलकारणभूता प्रकृतिर्न कुतश्चिदपि जायते, अतो मन्यते सा कारणरूपैव न तु कार्यरूपा कदापि साङ्ख्ये। अतो मूलप्रकृतिरित्यपि प्रोच्यते। साङ्ख्यसूत्रे मूले मूलाभावदूलं मूलम्। प्रोक्तमप्यस्याः केवलं कारणरूपत्वमेव

साधयति। इयमस्ति सत्त्वरजस्तमस्त्रिगुणात्मिका यथोक्तं साङ्ख्यसूत्रे—सत्त्वरजतमसां साम्यास्था प्रकृतिः एषा तु अहेतुमती, नित्या, व्यापिनी, अक्रिया, एका, अनाश्रिता, अलिङ्गा, निरवयवा स्वतन्त्रा चेति स्वीकृता। यथा'

हेतुमदनित्यमव्यापि सक्रियमनेमाश्रितं लिङ्गम्।

सावयवयं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्।।

इदमतिरिच्य षड्गुणा अपि प्रकृतौ प्राप्यन्ते यथा, त्रिगुणम्, अविवेकिता, विषयत्वम्, सामान्यम् प्रसवधर्मित्वं चेति नेह विस्तरश उच्यन्ते।

२ महत् बुद्धिर्वा, प्रतिज्ञातमिदं साङ्ख्यैर्यत् प्रकृतेर्महत्तत्त्वं समुद्भवति। बुद्धेर्धमो निश्चयो भवति। अयं घटः इति निश्चयात्मकं ज्ञानं बुद्धिरेव कारयति। सांख्यीयबुद्धि—द्विविधा सात्त्विकी तामसी चेति। धर्मो ज्ञानं वैराग्यम्, ऐश्वर्यं सात्त्विकबुद्धेर्गुणा मन्यन्ते। अधर्मोऽज्ञानमवैराग्यमनैश्वर्यं तामसीबुद्धेर्गुणास्सन्ति। प्रोक्तं सांख्यकारिकायां—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्।

सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्।। ज्ञातव्यमिदं वर्तते यत्सांख्यसूत्रे धर्मादयोः बुद्धेः कार्यत्वेन मता न तु गुणत्वेन। यथा—तत्कार्यं धर्मादि।

३ अहङ्कारः—सांख्यदर्शने बुद्धितत्त्वादहंकारः समुद्भवति। विलक्षणोऽयमहंकारः! बुद्ध्या विनिश्चितेऽर्थे प्रवर्ततेऽयम्। बाह्येन्द्रियद्वारा समालोचिते पदार्थे मननं ततोऽहमेवास्य कृतेऽधिकृतः इत्याकारकं ज्ञानं यत्र जागर्ति सोऽहंकारः। अयं द्विविधः सत्त्विको वैकृतश्च। सात्त्विकादहंकारत् मनः, चक्षुः, घ्राणं, रसना त्वक् कर्मेन्द्रियाणि किञ्च वाक्, पाणिः, पादः, पायू, उपस्थः पंचज्ञानेन्द्रियाणि अर्थादेकादशेन्द्रियाणि समुद्भवन्ति। तामसादहंकाराच्च शब्दस्पर्शरूपरसगन्धाख्यानि पंचतन्मात्राणि एभ्यः क्रमशः आकाशवायुतेजोजलपृथिवीरूपाणि पंच महाभूतानि आविर्भवन्ति। यथा सांख्ये कथितम्—

सात्त्विक एकादशकः प्रवर्तते वैकृतादहंकारात्।

भूतादेस्तन्मात्रस्सतामसस्तैजसादुभयम्।।

इमानि सर्वाण्यपि सम्मिल्य भवन्ति पंचविंशतितत्त्वानि यानि सांख्ये प्रमेयत्वेन प्रोक्तानि।

इदं सर्वमालोच्य वक्तुं शक्यते यत् सांख्यस्य रूपद्वयं प्राचीनम् अर्वाचीनं च। प्राचीने षष्टितन्त्रं प्रमेयत्वेन सुमतम् अर्वाचीने तु पंचविंशतिप्रमेयत्वेनेति। अथवा

कश्चन एतादशोऽपि सांख्यदार्शनिकवर्गो यो हि षष्टितन्त्रसमर्थकः। येन काचिदन्या व्याख्यानसरणिराविष्कृता या न सर्वैः समर्थिता वा भवेत्। किन्तु युक्तिदीपिकारचनासमये षष्टितन्त्रस्य दार्शनिकसमाजे प्रचलनं तद्वशादत्रापि प्रणेत्रा एवं कृतं स्यात्। दृश्यतेऽपि सांख्ये तत्त्वविषये पार्थक्यं महाभारतकालीनं सांख्यं सेश्वरं तद्विरीतमर्वाचीनम्। अस्यां परिस्थितौ पंचविंशतिपदार्था एव प्रमेयपदवाच्या मन्तव्याः।

सांख्ये कति प्रमाणानि भोः श्रावय?

जानीहि भोः!

साङ्ख्यदर्शनमतीव प्राचीनं दर्शनं यस्य प्रवर्तको महर्षिकपिलो मन्यते। अत्रप्रकृतिमहदहङ्काराणां

शब्दस्पर्शरूपरसगन्धतन्मात्राणां श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणज्ञानेन्द्रियाणां वाक्पाणिपादपायूपस्थकर्मेन्द्रियाणां मनआकाशवायुतेज अप्पृथ्वीमहाभूतानां पुरुषस्य च व्यक्ताव्यक्तज्ञानां पंचविशतिप्रमेयपदार्थानां सिद्धये प्रमाणानामनिवार्यत्वमवाप्यते। यथा—प्रमेयसिद्धिः प्रमाणाद्धि। सिद्धिशब्दस्यार्थो युक्तिदीपिकायाम् अवबोधोऽ—धिगमो वास्वीकृतोऽस्ति। प्रमेयस्यावबोधो येन भवेत् तत्प्रमाणम्। यथा—प्रमीयतेऽनेनेति प्रमाणम्। किञ्च साङ्ख्यसूत्रे प्रोक्तं यत् द्वयोरेकतरस्य वाऽप्यसन्निकृष्टार्थपरिच्छित्तिः प्रमा—तत्साधकतमं यत् त् प्रमाणम्। अत्र विज्ञानभिक्षुराचार्यो ब्रवीति—असन्निकृष्टः प्रमातर्यनारूढोऽनधिगत इति। एवंभूतस्यार्थस्य वस्तुनः परिच्छित्तिरव धारणं प्रमा सा च द्वयोर्बुद्धिपुरुषयोरुभयोरेव धर्मो भवतु। अतः स्पष्टं भवति यत् प्रमा बुद्धेरात्मनो वा एकस्यापि धर्मो वर्तते। प्रमाणलक्षणेऽस्मिन् स्मृतिव्यावर्तनाय अनधिगतपदप्रयोगो विहितोऽस्ति, भ्रमनिवारणाय वस्तुपदप्रयोगस्तथा संशयनिराकरणार्थम् अवधारणपदप्रयोगः कृतः सूत्रकारेण। प्रमां लक्षयन् श्रीमान् वाचस्पतिमिश्रो निगदति यत् संशयरहिता सत्यार्थप्रकाशिका ज्ञातविषयार्था चित्तवृत्तिरेव प्रमास्ति। यथा—असन्दिग्धाविपरीतानधिगतविषया चित्तवृत्तिः। सिद्धायां प्रमायां कतिविधं प्रमाणमितिजिज्ञासायामुच्यते श्रीमदीश्वरकृष्णेन यत् त्रिविधं प्रमाणमिष्टम्।कानि चेमानि प्रमाणानि तदुच्यते—दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्ध—त्वात्।अर्थात् दृष्टानुमानाप्तवचनानि प्रमाणानि साङ्ख्यैरभिमतानि, किं चैतेष्वेव प्रमाणेषु एतदतिरिक्तोपमानादिप्रमाणानमन्तर्भावः कृतः। अत उक्तं सर्वप्रमाण ।सिद्धत्वादिति। क्रमशः प्रमाणानामेषां लक्षणं प्रस्तूयते। आदौ दृष्टप्रमाणलक्षणमुच्यते।

दृष्टप्रमाणम्—साङ्ख्यदर्शने प्रत्यक्षप्रमाणमेव दृष्टप्रमाणपदवाच्यमस्ति। साङ्ख्यसूत्रे दृष्टप्रमाणं प्रत्यक्षप्रमाणनाम्ना लक्षयता सूत्रकारेण प्रोक्तम्—यत् सम्बद्धं सत् तदाकारोल्लेखि विज्ञानं तत्प्रत्यक्षम्। अर्थात् विषयाकारग्रहणशीलं विज्ञानमेव प्रत्यक्षप्रमाणम्। साङ्ख्यकारिकायां दृष्टप्रमाणलक्षणमेवमुक्तम्—प्रतिविषयाध्यवसायो दृष्टम्। तत्त्वकौमुद्यां श्रीमिश्रेण अध्यवसायग्रहणस्य कारणं संशयव्यच्छेदमङ्गीकृतम्। संशयज्ञानमनव—धारणात्मकं सदनिश्चयरूपं मन्यते। एतद्विपरीतम् अध्यवसायात्मकज्ञानं भवति निश्चायकम्। यथा—अत्राध्यवसायग्रहणेन संशयं व्यवच्छिनत्ति, संशयस्यानवस्थितग्रह—णत्वेनानिश्चितरूपत्वात्। निश्चयोऽध्यवसाय इति विषयग्रहणाद् असद्विषयकविपर्ययो दूरीक्रियते। किञ्च प्रतिग्रहणेन अनुमानस्मृतादयो निराक्रियन्ते। यथा—विषयग्रहणेन चासद्विषयं विपर्ययमपाकरोति। प्रतिग्रहणेन चेन्द्रियार्थसन्निकर्षादनुमानस्मृतादयश्च पराकृता भवन्ति। माठरवृत्तिकारेण दृष्टप्रमाणमेवं लक्षितम्—विषयं विषयं प्रति योऽध्यवसायो नेत्रादीनामिन्द्रियाणां पंचानां रूपादिषु तत्प्रत्यक्षं प्रतिपत्तिरूपम्। दृष्टप्रमाणोक्तविषयपदस्य व्याख्यानं कुर्वता श्रीमिश्रेण प्रोक्तम् यत्—विसिन्वन्ति विषयिणमनुबधनन्ति स्वेन रूपेण निरूपणीयं कुर्वन्तीति यावत्। विषयाः पृथिव्यादयः सुखादयश्च युक्तिदीपिकायामपि विषयलक्षणेवमेव कृतम्। यथा—विषिण्वन्ति विषयाः शब्दादयः। एवं प्रकारेणात्र दृष्टप्रमाणस्य सम्पूर्णं लक्षणं भवति प्रतिविषयमित्यनेन इन्द्रियग्रहणम्। तत्र यो विषयनिश्चयोऽध्यवसायो वा स प्रतिविषयाध्यवसायः। अध्यवसायो बुद्धिव्यापारो ज्ञानम्। किञ्च ज्ञानमित्युक्ते ब्रवीति श्रीमिश्रो यत् उपात्तविषयाणमिन्द्रियाणां वृत्तौ सत्यां बुद्धेस्तमोऽभिभवे यः सत्त्वसमुद्रेकः सोऽध्यवसाय इति वृत्तिरिति ज्ञानमिति चाख्यायते। योगदर्शनेऽपि प्रत्यक्षप्रमाणमेवं सम्मतं यत् यत्र इन्द्रियद्वारेण बाह्यवस्तूपरागाच्चित्तस्य तद्विषयसामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षम्। अतो वक्तुं शक्यते यद् बुद्धेः सात्त्विकवृत्त्या इन्द्रियार्थसन्निकर्षे सति यज्ज्ञानं तदेव दृष्टप्रमाणमथवा प्रत्यक्षप्रमाणमुच्यते। ज्ञातव्यमस्ति यत् साङ्ख्यसूत्रमतिरिच्य न क्वचिदपि दृष्टप्रमाणं प्रत्यक्षनाम्ना कथितं सर्वत्र दृष्टप्रमाणाभिधानमिदमवलोकितम्।

यद्यपि न्यायदर्शनोक्तं प्रत्यक्षप्रमाणलक्षणं वरं यथा—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्। प्रत्यक्षप्रमाणावबोधकेऽस्मिन् लक्षणे विशेषणत्रयमस्ति प्रत्यक्षस्य। प्रथमम् अव्यपदेश्यम् अर्थात् शब्दाबोध्यं शब्दव्यदेशयस्यागमात्। द्वितीयं अव्यभिचारि अन्यस्मिन्नन्यस्य ज्ञानमभिचारः तस्याभावो यत्र तदव्यभिचारि असन्दिग्धमित्यर्थः। तृतीयं व्यवसायात्मकं निश्चयात्मकम् तथापि

अत्र अभिव्यभिचारि व्यवसायात्मकं च विशेषणद्वयं समानार्थकं प्रतिभाति। अत एतस्माल्लक्षणात् साङ्ख्योक्तं 'प्रतिविषयाध्यवसायो दृष्टम्' साधु लघु च कथं न मन्यताम्। अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्। अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुरिति श्रवणात्।

अधुना दृष्टप्रमाणमुपस्थाप्यानुमानप्रमाणमुपस्थाप्यते।

अनुमानप्रमाणम्—साङ्ख्यदर्शने द्वितीयं प्रमाणमनुमानमस्ति। यद्धि ' प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्' इत्युक्तम्। अत्र प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद् व्यापकज्ञानमुनमानं प्रमाणमिति विज्ञानभिक्षुराचार्यो वदति। स्पष्टमेवानुमानम्। व्याप्यव्यापकजन्यमनुमानं साङ्ख्यकारिकादशा 'तल्लिंगलिंगिपूर्वकम्, त्रिविधमनुमानमाख्यातम्'। व्याप्यं व्यापकं च स्पष्टयन् श्रीवाचस्पतिमिश्रमहोदयो वक्ति यत् लिङ्गं व्याप्यं, लिङ्गि व्यापकम्। शङ्कितसमारोपितोधिनिराकरणेन वस्तुस्वभावप्रतिबद्धं व्याप्यम्। येन च तत्प्रतिबद्धं तद्व्यापकम्। व्याप्यव्यापकभावपक्षधर्मताज्ञानपूर्वकमनुमानम्।

साम्प्रतमनुमानत्रैविध्यमिहोच्यते—प्रथमं पूर्ववत्, द्वितीयं शेषवत् तृतीयं सामान्यतोदृष्टं चेति।

पूर्ववदनुमानप्रमाणम्—यत्र कारणं दृष्ट्वा कार्यस्यानुमानं क्रियते, तदनुमानं पूर्ववदनुमस्ति। मेघोन्नतिं कारणं दृष्ट्वा वृष्टिं कार्यं साधयन्ति जना लौकिका अपि। यथा दीपिकायाम्—

यथा—कारणमभ्युदितं दृष्ट्वा भविष्यत्त्वं कार्यस्य प्रतिपद्यते। तद्यथा मेघोदये भविष्यत्त्वं वृष्टेः। श्रीमान् वाचस्पतिमिश्रस्तु शब्दान्तरेण पृथगेव लक्षयति। तदीयं कथनमिदं यत् यस्य स्वलक्षणं स्वरूपं वा पूर्वं दृष्टम्। तच्चेति—दृष्टस्वलक्ष—णसामान्यविषयं यत् तत्पूर्ववत्, पूर्वं प्रसिद्धं दृष्टस्वलक्षणसामान्यमिति यावत्। यथा धूमाद्वह्नित्वसामान्यविशेषः पर्वतेऽनुमीयते, तस्य च वह्नित्वसामान्यविशेषस्य स्वलक्षणं वह्निविशेषो दृष्टो रसवत्याम्।

शेषवदनुमानप्रमाणम्—कार्यनिष्पन्नतामवलोक्य यत्र कारणसत्तावगम्यतेऽनुमीयते वा तच्छेषवदनुमानमुच्यते। कुमारं विलोक्य तत्पित्रोः संयोगमनुमाति कश्चित्। दीपिकायाम्—यथा कार्यनिवृत्तिं दृष्ट्वा कारणसद्भावं प्रतिपद्यते। तद्यथा—कुमारकं दृष्ट्वा द्वयसमापत्तिम्।

सामान्यतोदृष्टमनुमानम्—अनुमानमिदमदृष्टस्वलक्षणसामान्यविषयं भवति।

यथेन्द्रियविषयकमनुमानम्। अत्र रूपरसगन्धस्पर्शादीनां क्रियात्वेन करणत्वमनुमीयते।

युक्तिदीपिकायां कथितमस्ति यद्यत्र एकत्र द्वयोरव्यभिचारमवाप्य अन्यस्मिन् देशे किं वा काले तज्जातिमात्रवस्तुषु अव्यभिचारज्ञानं जायते। यथा एकत्र दृष्टं धूमाग्न्योः साहचर्यमन्यत्रापि धूमेनाग्निसत्तात्वं बोधयति। सामान्यतोदृष्टानुमानस्य पुष्ट्यै दृष्टान्तचतुष्टयमवाप्यते। इह हि दृष्टान्तद्वयं दर्श्यते। प्रथमस्तु यदा सहभुवामेकस्य विशिष्टगुणमुपलभ्य शेषाणामपि तद्वत्वमनुमीयते तदा सामान्यतोदृष्टम्। यथा वृक्षादेकस्य फलस्य पाकमुपलभ्य शेषाणां वृक्षान्तराणां च पाकोऽनुमीयते।

द्वितीयश्च यदा समुद्रादेकमुदकबिन्दुं प्राश्य शेषस्य लवणमनुमीयते। यद्यपि तत्वकौमुद्यां वीतावीतभेदाभ्यामनुमानस्य द्वैविध्यमुपकल्पितमस्ति। यत्रान्वयमुखेन प्रवर्तमानं विधायकं वीतं तथा व्यतिरेकमुखेन प्रवर्तमानं निषेधकमवीतमित्युक्तं वर्तते। वीतानुमाने पूर्ववत्सामान्यतोदृष्टे परिगणिते स्तः अवीते शेषवदनुमानं गृहीतमस्ति।

आप्तवचनप्रमाणम्—साङ्ख्यनये आगमप्रमाणमेव आप्तप्रमाणसंज्ञकमस्ति। श्रीमदीश्वरकृष्णेन साङ्ख्यकारिकायामेव प्रमाणमिदमुद्घोषितम् ' आप्तश्रुतिराप्तवचनं तु'। प्रमाणमेतत्सर्वैरपि दार्शनिकैः प्रायशो भिन्न—भिन्ननामभिस्स्वीक्रियत एव। आप्तप्रमाणमिदं तदेव प्रमेयं साधयति,यद् दृष्टानुमानाभ्यां न साधयितुं शक्यते। दृष्टस्येन्द्रियार्थसन्निकर्षजन्यत्वम्, अनुमानं च दृष्टानुसारि , अर्थात् भूयो भूयो महानसे धूममानलयोर्व्याप्तिरेव या पूर्वं दृष्टा सैवानुमानं जनयति, परन्तु परोक्षप्रमेयसाधनार्थं पूर्वोक्तप्रमाणद्वयविफले आप्तवचनं हि यदागमाख्यं, तदेव समर्थं भवतीति ब्रूते ईश्वरकृष्णाचार्यो। तद्यत्—परोक्षमाप्तागमात्सिद्धम्। आप्तश्रुतिरित्यस्य निरुक्तिः, आप्ता चासौ श्रुतिश्चेति वर्तते। तत्र रागद्वेषादिदोषरहितैर्जनैः स्वार्थाभिसन्धिशून्यपरार्थं प्रोक्ता श्रुतिराप्ता। श्रीमद्वाचस्पतिमिश्रेणपि आप्ता चासौ श्रुतिश्चतिरेवास्यार्थो गृहीतः। अनेन अपौरुषेयवेदवाक्यजनितत्वेन सकलदोषाशङ्काविनिर्मुक्तेर्युक्तं श्रुतिवाक्यमङ्गीकृतम्। आप्तपदग्रहणेन जैनबौद्धचार्वाका नैव स्वीकृता मिश्रमहोदयैः।आप्तपुरुषस्य लक्षणं माठरवृत्तौ समीचीनमेव कृतं वर्तते। तद्यत्—

स्वकर्मण्यभियुक्तो यो रागद्वेषविवर्जितः।

पूजितस्तद्विधैर्नित्यमाप्तो ज्ञेयः स तादृशः।।

प्रमाणानीमानि मया एकस्मिन् पद्ये सङ्क्षेपतो वर्णितानि।

यथा—

।

तत्त्वानां शृणु साधनाय सुमता दृष्टानुमानागम

आद्यं चेन्द्रियसत्त्ववृत्तिजनितं दृष्टाभिधानाच्छुतम्।

व्याप्यव्यापकपक्षधर्मसहितं बोध्यानुमानं तत–

श्चाभ्यां साधयितुं न शक्यत इह ह्याप्तेन तत्साध्यते।साङ्ख्यनये उपमान–प्रमाणं न पृथक् प्रमाणं स्वीकृतम्, अस्य आगमप्रमाणेऽन्तर्भावः क्रियते। यथा गौरेव गवय इति चाप्तोपदेशबलात् प्रतिपत्ता अप्रसिद्धं गवयमुपलभते न साधर्म्यमात्रात्। तस्मान्न शब्दात्पृथगुपमा। सत्यमिदमाप्तवचन–

जनितप्रसिद्धवस्तुसाधर्म्यज्ञानाहितसंस्कारस्योत्तरकाले प्रत्यक्षेण गृहीतं नोपमानम् अपितु आप्तवचनादागम एवेति मदीयो विमर्शः। परन्तु श्रीवाचस्पतिमिश्रमहाशय उपमानप्रमाणमनुमानप्रमाणेऽन्तर्भावयति। यथा योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः सोऽप्यनुमानमेव। यो हि शब्दः वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे तस्य वाचकः, यथा गोशब्दो गोत्वस्य प्रयुज्यते चैवं गवयशब्दे गोसदृशे इति, तस्यैव वाचक इति तज्ज्ञानमनुमानमेव। माठरवृत्तावपि उपमानं न प्रमाणान्तरमनुमानात्पृथक् मतम्।

उपमानप्रमाणमनुमाने मयेत्थमन्तर्भावितं तदिदं पद्यम्–

साध्यते गवयस्तत्र गोसदृशत्वहेतुना।

प्रमाणं नैव मन्तव्यमनुमानात्पृथक् च तत्।।

अर्थापत्तिप्रमाणमपि साङ्ख्यदर्शने न स्वीकृतमपितु अस्यान्तर्भावः अनुमानप्रमाण एव कृतः। यथा–एवमर्थापत्तिरपि न प्रमाणान्तरम्। तथा हि जीवितश्चैत्रस्य गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पनमर्थापत्तिरभिमता वृद्धागमानाम्। सोऽप्यनुमानमेव।

अर्थापत्तिप्रमाणविषये मदीयं पद्यमयं वक्तव्यमेतदवलोकनीयम्। तद्यत्–

देवदत्तो दिवा नात्ति पीनोऽस्ति दृश्यतेऽपि सः।

अनुमानं मतं ह्येतद् रात्रावत्तीति कल्पनात्।।

पीनत्वं साध्यते यत्र रात्रिभोजनहेतुना।

हेतुसाध्यसमादिष्टमनुमानं कथन्न तत्।इत्थं मया साङ्ख्यदर्शनमाश्रित्य प्रमाणमीमांसनमुपस्थापितम्। यद्यपि तत्र विषयेऽस्मिन् बहु तर्कपूर्णमतेन ऐतिह्याभावादीनां

प्रमाणानां निरसनं प्रदर्शितं तथापि विषयविस्तरभियेह न तत्समग्रं वर्णितमिति।

मित्र! त्वया गीतापि पठिता? तत्र यानि च सम्बोधनपदानि तानि सार्थकानि निरर्थकानि वेति। कथय। अयि भवांस्तु मां परीक्षते, श्रूयतान्तावदसकृन्मया गीताश्रवणमस्य विश्वविद्यालयस्य मालवीयभवने विदुषां मुखाच्छ्रुता। विमृष्टमपि तदिदानीमाकर्णय।

श्रीमद्भगवत्कृष्णमुखारविन्दनिस्सृतगीता सकलमानुषकल्मषहारिणी गङ्गेव निखिलजनमन:पावनी तीर्थभूमिरिव सर्वधर्मसम्भावहृदया भगवन्मायेव सकृदपि पठतो मनुजान् कृतार्थयन्ती भारतवर्षगरिमाणं रक्षयन्ती विद्योतमानास्ति सौदामनीवेह जगति न कं मोहयति जगदान्धकारावच्छिन्नजनं मार्ग दर्शयन्ती मोचयति। जानन्ति प्रेक्षावन्तो विद्वांस: श्रोतारो मन्तारश्च यदियं श्रीमद्भगवद्गीताहवेऽर्जुनाय प्रोक्ता मोहोपहितचेतसे मोहापहितचेतसा श्रीकृष्णेन महाभारते। अये विमर्शनशीलविशालबुद्धयो बुद्धिमत्स्वपि यदि वक्ता स्वयं भगवान् श्रीकृष्ण: श्रोता चार्जुनस्तदा प्रतिपदं सार्थकमेव मन्तव्यं वार्त्तालापीयमिति चिन्तयामि, तत्रापि वर्णसंयोजक: श्रीमान् व्यासस्तर्हि सर्वमपि समुपादेयमेव न लेशमात्रामपि परिहेयमित्यनुमिनोमि सनातनमार्गानुसारी। बहुधा प्रतिरविवासरं मालवीयभवने मनीषिणां गीताप्रवचनं श्रोतुमुपस्थित एकाग्रचित्तेन यत्किमप्यश्रौषं तेन हृदये महानानन्दोऽजायत, तदानीमेव विचारितमासीन्मया यत्सम्बोधनपदमाश्रित्य निबन्धे लेखनीय: सम्प्रति लिखित: कथ्यते।

श्रीमद्भगवद्गीतायामेकविंशत्युत्तरद्विशतसम्बोधनपदानि प्राप्तानि प्रायश:। तानि सन्तीमानि—सञ्जय १, आचार्य १, द्विजोत्तम १, अच्युत ३, अनन्त १, अनन्तरूप १, केशव ४, कृष्ण ८, मधुसूदन ४, जनार्दन ५, माधव १, वार्ष्णेय १, अर्जुन १९, पार्थ २७, परन्तप १०, अरिसूदन १, भारत २१, कौन्तेय २३, पुरुषव्याघ्र १, पुरुषर्षभ २, महाबाहो १४, कुरुनन्दन ३, धनञ्जय ८, अनघ २ ;अर्जुनायद्ध, कुरुसत्तम १, कुरुप्रवीर १, केशिनिषूदन १, पाण्डव ५, तात १, भरतसत्तम १ , भरतश्रेष्ठ १, भरतर्षभ ५, पुरुषोत्तम ३, भूतभावन १, भूतेश १, देवदेव १, देव १, देवेश १, देववर १, जगत्पते १, जगन्निवास ३, भगवन् १, कुरुश्रेष्ठ १, गुडाकेश २, कमलपत्राक्ष १, परमेश्वर १, प्रभो १, योगेश्वर १, राजन् ३, विश्वेश्वर १, विश्वरूप १, महात्मन् १, विष्णो २, सव्यसाचिन् १, हृषीकेश २, यादव १, सखे १, अप्रतिमप्रभाव १,सहस्रबाहो १, विश्वमूर्ते १, महीपते १, गोविन्द १

एतेषु सम्बोधनपदेशु श्रीकृष्णम्प्रति अच्युताऽनन्ताऽनन्तरूपाऽप्रतिमप्रभाव—केशव

—कृष्ण—मधुसूदनारिसूदन—जनार्दन—माध्व—

वार्ष्णेय—महाबाहु—पुरुषोत्तम—भूतभावन—भूतेश—देवदेव—देव—देववर—देवेश—जगन्निवास—जगत्पति—भगवत्—कमलपत्राक्ष—

परमेश्वर—प्रभु—योगेश्वर—विश्वेश्वर—विश्वमूर्ति—केशिनिषूदन—विश्वरूप—महात्म—हृषीकेश—यादव—सखि—सहस्रबाहु—गोविन्दपदानि

अष्ट्त्रिंशत्प्रकारकाणि प्रयुक्तानि प्राप्तानि।

अर्जुनम्प्रति अर्जुन—पार्थ—परन्तप—भारत—कौन्तेय—भरतश्रेष्ठ—कुरुनन्दन—कुरुप्रवीर—कुरुसत्तम—कुरुश्रेष्ठ—धनञ्जयानघ—पाण्डव—

गुडाकेश—सव्यसाचि—पुरुषव्याघ्र—पुरुषर्षभसम्बोधनपदानि दृष्टानि सप्तदशप्रकारकाणि।

द्रोणाचार्यम्प्रति आचार्य—द्विजोत्तमसम्बोधनपदद्वयं प्रयुक्तमस्ति।

सञ्जयं प्रति सञ्जयसम्बोधनपदमेकमेवोक्तम्।

धृतराष्ट्रं प्रति भारत—राज—परन्तप—महीपतिसम्बोधनपदानां चतुष्टयं प्रयुक्तमस्तीति लभ्यते।

यद्यपि प्रकारत्वेन सर्वाधिकं सम्बोधनपदं भगवतः श्रीकृष्णस्यैव दृश्यते तथापि सङ्ख्यादृष्ट्यार्जुनस्य सर्वाधिकानि प्राप्तानि। इमानि सर्वाण्यपि साभिप्रायसूचकानि यथावसरं यथाकालं प्रयुक्तानि दृष्टानि सार्थकान्येव। नैकमपि सम्बोधनपदं मया व्यर्थमालक्षितम्। अधुनादौ भगवन्तं प्रति प्रयुक्तसम्बोधनपदानामौचित्यं प्रदर्श्यते।

श्रीमद्भगवद्गीतायां प्रथमं सम्बोधनपदं 'सञ्जय'१ इति वर्तते। पदमिदं गीतापाठकानामवधनताधायकं मन्तव्यं सावधानस्यैव ज्ञानग्राहकत्वात्, निरवधानस्तु विवेच्यग्राह्यज्ञानाद् भवति दूरमिति सर्वविदितम्। द्वितीयं पदं सम्बोधनं 'आचार्य'२, तृतीयं 'द्विजोत्तम'३ इत्यस्ति। अत्र ज्ञेयं यत् यावन्नारभ्यतेऽर्जुनकृष्णसंवादस्तावद् गीताया पीठिकाभागः कथन्न मन्यन्तामिति। वस्तुतो गीतारम्भस्तु' सेनयोरुभयोमध्ये रथं स्थापय मेऽच्युत!।' इति कथनात्स्वीकरणीयः। अतो धनुर्धरोऽपि धर्मधुरीणः, शस्त्राप्रवीणोऽपि शास्त्राकुशलो न विस्मरति मङ्गलवचनाचरणम्। अस्मादेव कारणात्प्रथमन्तेन ' अच्युत'सम्बोधनं प्रयुक्तम्। यथोक्तं मङ्गालविषये यत् 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते वीरपुरुषाणि भवन्ति, आयुष्मत्पुरुषाणि

चाध्येतारश्च सिद्धार्था यथा स्युरिति।'जनैरहमुपहास्यतां गतो युद्धक्षेत्रो किमर्थं मङ्गलं करणीयमिति विमृशन्। मङ्लन्तु ग्रन्थप्रणयने आचक्षर्यते। अये मान्या:! अर्जुनोऽपि विलिखन्नस्ति स्वरणकौशललेखन्या विशालेतिहासरूपात्मकं महाभारतम्, अतस्तेनाचरितं मङ्गलमिदम्। द्वितीयमच्युतसम्बोधनपदमेकादशाूयाये 'विहारशक्षयासनभोजनेषु प्रमादात् त्वं मया कदाचिदसत्कृतोऽसि,अपमानित: सन्नपि न त्वया स्वस्वरूपात् प्रच्यवितव्यमिति त्वयि अच्युतत्वमौचित्वमेव भजते, तस्मात्तवमच्युतोऽसि। एवं भवति लोके कदाचित्कुपितं मित्रं गुह्यमपि प्रकाशयति यदपमानितं मित्रं मैत्रीं भिनत्ति हृदि वैरं पालयति च, परन्तु त्वन्तु जानासीदं समग्रमपि विस्मृत्य सखायं मनुसे माम्। अतस्त्वमच्युतो मन्यत इत्यपि मत्वार्जुनेन अच्युतसम्बोधनं प्रयुक्तमिदं माध्यमिकं मङ्गलं मन्यतामिति। तृतीयमच्युतसम्बोधनमन्तिमे भागे गीताया अष्टादशाध्याये चतुरतया प्रयुक्तमवाप्यते। उपदेशाधिगमे स्वस्मृतिमापन्नोऽर्जुनो नष्टमोहो स्थितस्सन्नापगतसन्देहो भगवन्तं श्रीकृष्णं सम्बोध्यन् दर्शयति यद् यस्यां कस्यामपि परिस्थितौ त्वं स्वस्वरूपावस्थितो न मां हास्यसीति। अच्युतपदमीश्वरवाचकमपि सर्वज्ञातम्। अत: आरम्भे मध्येऽवसाने चार्जुनेन मङ्गलाचरणरूपात्मकमच्युतसम्बोधनंव्यधायि।

केशवसम्बोधनं विमृश्यते, प्रशस्ता: केशा यस्यासौ केशव:, किमर्थमात्मकल्या–णमभिपश्यन्नर्जुन: सुहृदं केशवं ब्रूते! चिन्त्यतां मन्ये त्वं मधुराधिपतिरसि, त्वं सर्वसुन्दरस्सन् केशान् प्रसाधयितुं मया बहुधालक्षितोऽसि। अहं चिन्तितस्तिष्ठामि प्रतिपलं मम सर्वा: क्रिया: सूत्रवद् भवन्ति, परन्तु त्वं चिन्तारहित: सन् केशान् सजसि न सम्यङ्मन्त्रयसे इति पूर्वमहमनेकवारमपश्यं त्वन्मित्रभूतत्वात्, तस्माद्धे केशव! इदानीमहं सङ्क्टापन्न इति त्वं जानासि, सर्वाण्यपि लक्षणानि वैपरीत्यं भजन्ते। अहमात्मकल्याणं न पश्यामि युद्धेऽस्मिन् इति त्वं जानीहि। अन्यच्च लोके सखा स्वमित्रं प्रति तद्वेशभूषागुणरूपादिभिरपि सम्बोध्यमानो दृश्यत एव। अतस्तद्वदेवात्रापि स्वीकर्तव्यम्।

कृष्णसम्बोधनपदमधुना विचार्यते–कृष्धातोर्नक्प्रत्यये कृष्णशब्दो निष्पद्यते। किञ्च कृष्ब्वादिपरस्मैपदधतोरपि नक्प्रत्यये निष्पन्नोऽयं कृष्णशब्दश्श्यामो वर्ण: स्वीक्रियते। किञ्चाकर्षति सर्वानसौ कृष्ण इत्यपि कथन्नाङ्गीकरणीयम्। श्रीमद्भगवद्गीयामष्टौ कृष्णसम्बोधनपदानि प्रयुक्तानि। प्रथमं 'न काङ्क्षे विजयं कृष्ण! न च राज्यं सुखानि च। अत्र प्रयुक्तं कृष्णसम्बोधनपदं सर्वथौचित्यं भजते, विजयराज्यसुखानि सर्वानपि जीवानाकर्षन्त्येव, तदप्राप्तौ चानिष्टमपि कारयन्ति, परन्तु नामहर्जुन एभिराकृष्टो

भविष्यामि। यद्यपि त्वमपि अखिलानकार्षसि तथापि नाहं त्वद्वचोभिरधुना येन केनापि प्रकारेणाकर्षितो भविष्यामीति ज्ञायताम्। 'एवमधर्माभिभवात्कृष्ण! प्रदुष्यन्ति कुलस्त्रियः' इति स्थाने अधर्मस्याकर्षणत्वं सर्वज्ञातं कुलक्षये समुत्पन्नोऽधर्मो वर्णसङ्करत्वं जनयिष्यतीति, नाहन्तु मधुरवाक्याकृष्टो युद्धं करिष्य इति ध्वनयति। एवमेव प्रकारेण यत्र कुत्रापि कृष्णसम्बोधनपदं श्रुतं पठितं तत्र—तत्रेदमेव कदाचिन्मनो मे पश्यति।

माधवसम्बोधनं परिशील्यते—अहो ! अवलोकनीयमिदं पदं 'तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्। स्वजनं हि कथं हत्वा सुखिनः स्यां माधव। अविद्योपहितचैतन्योऽर्जुनोऽविद्यापतिं माधवं सम्बोध्यन् ब्रवीति यन्मायाया धव इति माधवः। अये माधव! अत्र मां स्वजनमोहो बाधमानोऽस्ति। त्वमेव मायाया अविद्यायाः स्वामी वर्तसे, अज्ञाननिकेतनं मां बोधयेति। माधवसम्बोधनपदमेकवारमेव श्रीमद्भगवद्गीतायां प्रयुक्तमित्यनेनापि मायापतिरेक एव न बहव इति सूचितम्।

मधुसूदनारिसूदनसम्बोधनपदद्वयपि सर्वथौचित्यपरमेव 'कथं भीष्ममहं सङ्ख्ये द्रोणं मधुसूदन! इषुभिः प्रतियोत्स्यामि पूजाहवरिसूदन!।मधुनामको दैत्यस्त्वया मारितो न कश्चित्पूजनीयो हतस्त्वयेति। शत्रवो मार्यन्ते न पूज्याः, दोषा वाच्या गुरोपि यद्यपि सर्वज्ञातं वचनन्तथापि वाच्या न मारणीया, यदि मारणीयास्तत्रापि इषुभिः! नाहमिदं स्वीकरोमि। अतएव सम्बोधनद्वयमत्र वक्तव्यसापेक्षं समुचितं प्रतिभाति।

वार्ष्णेयसम्बोधनमर्जुनेन वर्णसङ्क्रसम्भावनावसरे प्रयुक्तम्।अत्र वर्णसङ्क्रेण कुलनाशो भविष्यति। यन्न मे रोचते। त्वमसि वृष्णिवंशोद्भवः। अतः स्त्रीषु दोषो मा गच्छेत् पितरश्च विलुप्तपिण्डोदकक्रिया न भवेयुरेतदर्थं मया वंशरक्षा चिन्तनीया। वृष्णौ भवः वार्ष्णेय इति पदस्य सार्थकतावश्यमेव मन्तव्या। यद्यपि स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसभङ्करः। इत्यत्र स्त्रीषु दुष्टासु हे कृष्ण! जायते वर्णसभङ्करः। इति क्रियतां न तथापि कापि क्षतिः, परन्तु वार्ष्णेयपदप्रयोगेण वंशसूचनवैशिष्टषं न बोधयितुं शक्यते कृष्णपदेन। वार्ष्णेयपदं कुलनैरन्तर्याभिव्यञ्जकं न तु व्यक्तिमात्राभिधायकम्।

गोविन्दसम्बोधनपदमर्जुन एकवारमेव गीतायामकरोत्, यस्याभिप्रायो मम मते वर्तते यदर्जुन आत्मनः इन्द्रियाणां वशित्वं दर्शयति 'किन्नो राज्येन गोविन्द किं भोगैर्जीवितेन वा। ' गोविन्दपदस्येन्द्रियाध्यक्ष इत्यर्थोऽपि मन्तुं शक्यते। इन्द्रियनिग्रहावसरे इन्द्रियनिग्रहरूपसम्बोधनं कथं नौचित्यं प्रकटयति। एवम्प्रकारेणान्यान्यपि श्रीकृष्णम्प्रति प्रयुक्तानि सम्बोधनपदानि सर्वथा समुचितान्येवाभान्ति।

अधुनार्जुनम्प्रति श्रीकृष्णकथितानि सम्बोधनपदानि विविच्यन्ते।

श्रीकृष्णेन श्रीमद्भगवद्गीतायां सर्वप्रथमम् अर्जुन इति सम्बोधनं प्रयुक्ततिमत्यवलोक्यते। साभिप्रायमिदं पदम् अर्जुनशब्दस्य सर्वशुक्लवाचकत्वात्। शुक्ले वर्णे लाञ्छनाभावो मतः। अतस्त्वमुर्जुनस्त्वयि कलभङ्गाः कथमुपस्थिताः? अनेन सार्थकमिदं सम्बोधनम्।

द्वितीयं सम्बोधनपदं भगवता 'पार्थ' इति प्रयुक्तम्। पृथायाः पुत्रः पृथाशब्देऽपत्ययार्थेऽणि कृते निष्पन्नः पार्थशब्दो मातृपक्षं समुद्घोषयति। मन्मतमिदं यदिदमुक्त्वा सूचयति भगवान् यत् अर्जुन मा भव नपुंसकोऽधुनात्वमाहवेऽस्मिन्। न जानासि ते जन्मदात्री कियद् दुःखमनुभूतवती, कियतीं पीडाञ्च सोढवती। साम्प्रतमपि प्रतिपलं सहमाना वर्तते। अतस्त्वमनुचितं मा कुरु। लोकेऽपि श्रूयते कश्चिद् वदति कमपि प्रेरयन् यस्मिन् कस्मिन् प्रतिज्ञातकर्मणि ' यदि त्वं निजमातृदुग्धमपिबस्तदा योद्धव्यम्। ततो मातृशब्दश्रवणोद्विग्नस्तत्कालमेव योद्धुं प्रवर्तते कलहावसर इति सुप्रसिद्धमेव।

कौन्तेयसम्बोधनपदमिह चतुर्थं विमृश्यते—सरहस्यं सप्रयोजनं प्रयुक्तमिदं विलक्षणं सम्बोधनं पार्थसम्बोधनवदस्ति। कुन्तीशब्दादपत्यार्थे ढकि निष्पन्नोऽयं कौन्तेयो मातृजनितदुःखाभिव्यञ्जनतत्परः। युद्धविरतमर्जुनं युद्धाय शाब्दीभावनया प्रवर्तयितुमयमेवैकोपायः समुचित इति बहुधा प्रयुक्तमिदं पदं भगवता।

परन्तपसम्बोधनपदं भगवता यथोचितमाविष्कृतमिह परिशील्यते—परं शत्रुं द्विषं वा तापयतीति परन्तपः, अर्थात् हे अर्जुन! असह्यं सहसे कठिनं कार्यं सरलतया कुरुषे, शत्रूनं रणक्षेत्रे पातयसि, परन्तु हृदयदुर्बलतया पराजितो जातः कथम्?इदं तुच्छं हृदयदौर्बल्यं त्वया त्यक्त्वा सद्य एवोत्थातव्यमिति। परन्तपसम्बोधनपदेन बोध्यते। तस्मादस्य सार्थक्यमौचित्यञ्च।

भारतसम्बोधनपदेन वंशगौरवं व्यनक्ति भगवान्। भरतशब्दादणि भारतशब्दो निष्पन्नः। यत्रापि प्रयुक्तमिदं पदं तत्र—तत्र भरतवंशीयराज्ञां यशांस्येव सारगर्भिततया गीतानि। भीष्मादयो भरतवंशोद्भवा ये आजीवनमखण्डब्रह्मचर्यव्रतमपालयन्। इमान् स्मर पश्य महापुरुषान्। एकस्त्वमसि यच्छीतोष्णसुखदुःखदान् मात्रास्पर्शाननित्या नुत्पत्तिविनाशशीलान् तापानमसमर्थोऽसि सोढुम्। अनेन प्रकारेण कुरुप्रवीर—कुरुनन्दन—कुरुसत्तम—कुरुश्रेष्ठ—भरतर्षभभरतश्रेष्ठ—भरतसत्तम—पुरुषव्याघ्र—पुरुषर्षभसम्बोधनपदानि

यथावसरं प्रयुक्तानि अनुसन्धेयानि। एषां पदानां प्रयोगेण 'कुलं वृत्तेन रक्ष्यते' इति बोधितम्। त्वमेव कुरुवंशरक्षकोऽसि तस्माद्धर्मयुद्धं कुरुष्व। ननूपस्थितेष्वपि भीष्मादिषु कथमर्जुनः कुरुसत्तम इति प्रोच्यते। कुरुषु ये सज्जनास्तेष्वन्यतमः इति कुरुसत्तमः। न भीष्मादीनां भगवतो मित्रत्वभाग्योपलब्धिः केवलमर्जुनस्यैव तस्मादिदं सार्थकमुचितञ्चेति कथन्न मननीयम्।

धनञ्जयसम्बोधनपदेनाभिव्यञ्जितं यदनलः सङ्गं सम्पर्कमागतं वस्तु ज्वालयति तथैव त्वमपि सङ्गं विषयासक्तिं ज्वालय,नाशय। किञ्च ज्वलन् धनञ्जयः समत्वमाचरति कथमित्युच्यते। ग्रामे नगरे वा समुत्थितो धनञ्जयो न गणयति जनं तत्सामर्थ्यम्, सर्वानेव ज्वालयित्वा भस्मसात्कुरुते, तथैव सिद्धिविषये समत्वमाचर। अन्योऽपि अर्थोऽङ्गीकरणीयोऽस्य धनञ्जयसम्बोधनपदस्य। धनञ्जयत्यसौ धनञ्जयः। त्वत्कृते यश एव धनं तस्मात्त्वं यशोधनः, अर्थात्त्वं यशस्वी जेतासि रणे सपत्नानिति सर्वमालोच्य युद्धं कुर्विति।

पाण्डवसम्बोधनं श्रीमद्भगवद्गीतायां पञ्चवारमेव प्रयुक्तम्। यथा—यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव!।अत्र पाण्डुशब्दादपत्यार्थे कृतेऽणि पाण्डवशब्दो निष्पद्यते। अनेन बोधयति भगवान् यत्ते पिता पाण्डुरज्ञानजन्यमोहमुपगतः शापेनास्तङ्गमितरतिसुखो मृत्युङ्गतः, परन्तु न त्वं तादृशो भवाज्ञानशरणं गच्छेति भावः। किञ्च लोके श्रूयतेऽयोग्यपितृनाम्नापि पुत्रा आकार्यंते। न पाण्डुर्विख्यातो निजेन कर्मणेति धिया कदाचित्प्रोक्तवान् भगवान् स्यादिति।

गुडाकेशसम्बोधनं द्विवारं प्रयुक्तं भगवता श्रीकृष्णेन। गुडाका नाम निद्रा तां जयति योऽसौ गुडाकेशः। निद्रा तन्द्रा वा तमोगुणाधिक्यादाविर्भवति। अत्र भगवान् बोधयितुमीहते यत् त्वं सर्वथा सत्त्वसम्पन्नो भव न तमोगुणोपेत इति। किञ्च न कोऽपि त्वत्समानो यो जयेन्निद्राम्। सर्वे जन्तवो निद्रावशीभूताश्शेरत एव। परन्तु त्वां सर्वशक्तिमतीं तां निद्रामपि विजितवानसि तथापि युद्धक्षेत्रं प्रविश्य तमोगुणोद्भूतमाययान्यथा कर्तुमिच्छसि। अतस्त्वं विसृज्य सशरं चापं शोकसंविग्नमानसस्सन्नधुना रथमुपविश्यानुचितं कथं कुरुषे?

सव्यसाचिसम्बोधनपदमिदं निमित्तमात्रत्वसाधने भगवता प्रयुक्तं, तेनोक्तं यत् कौरवा मयैवेते मारिताः पूर्वमेव, त्व।केवलं सव्येनापि हस्तेन शरान् चालयसि चेदिमे मृता मरिष्यन्त एव। अतो वामहस्तेन शरचालकः सव्यसाची शब्दः सव्यसाचिन् सम्बोधने सार्थकमस्ति।

अनघसम्बोधनपदस्यार्थो निष्पापो भवति, सर्वथौचित्यमार्गगामी भगवान् जानाति यत् ज्ञानयोगं कर्मयोगं चोभावपि रागद्वेषादिरूपाज्ञानावच्छिन्नहृदय एव विगतकल्मषोऽधिगन्तुमर्हति। तस्मादवसरेऽस्मिन्नघपदंप्रयुक्तमवलोक्यते। किञ्च योगविषयः स एव हि ज्ञातुं शक्नोति यो भवेत्पापवृत्तिशून्यः। अन्यच्च न त्वं मारयिता कौरवान् तस्मात्त्वमनघोऽसि ततः सार्थकमिदं सम्बोधनम्।

आचार्यसम्बोधनपदमेकवारं दुर्योधनेन द्रोणाचार्यम्प्रति प्रयुक्तम्।अत्र पदमिदं व्यङ्ग्यनिष्ठं प्रतिभाति मध्यमपुरुषैकवचनक्रियाप्रयोगात्। यथा—पश्यैतां पाण्डु पुत्राणामाचार्य महतीं चमूम्। व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता।।अत्रापरमपि तवेतिपदं गुरुजनविरुद्धमिति मन्ये। अतोऽत्रासौ दुर्योधनः पाण्डवसैन्यबलदर्शनभीतिमान् सन्नेवाचार्यसम्बोधनं प्रयुक्तवान्। अन्यथा—पश्यतु पाण्डुपुत्राणामाचार्य महतीं चमूम्। व्यूढां द्रुपदपुत्रेण भवच्छिष्येण धीमता।।वक्तव्यमासीत्। अनेनैव गुरोरादरो दर्श्यते। न तु 'ते' तवं पदप्रयोगेण गुरोः सम्मानो भवति।

द्विजोत्तमसम्बोधनपदद्वारासौ कुबुद्धिर्मन्दमतिर्दुर्योधनो मध्यमपुरुषैकवचनान्तां क्रियां प्रयुङक्ते, 'निबोधत'। अत्रैव 'ते' पदमपि कथितम्। यथा—अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम। नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीमि ते।।

अन्यथा

अस्माकं तु विशिष्टा ये तान् बोधयतुहे द्विजो। नायका मम सैन्यस्य सञ्ज्ञार्थं तान् ब्रवीम्यहम्।। सन्निकृष्टेऽभिमुखे 'द्विजोत्तम' किञ्च 'ते' पदप्रयोगोऽनुचितो न प्रतीयते—ऽन्थेनापि इति।

महीपते सम्बोधनं विचारणीयमस्ति। यद्यपि धृतराष्ट्रं प्रति सञ्जयप्रयुक्तं तथापि धृतराष्ट्रो न महीपतिः तस्य पृथ्व्या एकदेशाधिपतेः। पदमिदन्तु मम मत्यार्जुनेन कदाचिद् वराहावतारे महीरक्षणतया विष्णोरवतारश्रीकृष्णम्प्रति प्रयुक्तं स्यादिति वदामि। श्रीकृष्णस्यैव महीपतिवाचकत्वात्।

राजन् सम्बोधनं सञ्जयेन धृतराष्ट्रम्प्रति प्रयुक्तम्, स एव धृतं राष्ट्रं येन विग्रहवानिति। वारत्रयं राजन् पदप्रयोगात् स्पष्टीभूतं यन्महीपते सम्बोधनं न सञ्जयो धृतराष्ट्रं प्रति अपितु अर्जुनः श्रीकृष्णम्प्रति प्रयुक्तवानासीदिति।

सुन्दरमुक्तं सखे किमपि यदीत्थं ब्रवीषि चेत्काव्यमपि पठितं स्यात्त्वया? श्रुतं नैषधीयं काव्यं यत्र रसराजः शृंगारः प्रवहति। वर्णय किञ्चित्।

शृणु वयस्य!

रसास्वादो गृहीतोऽनेकवारं सत्यं तत्काव्यं विद्वदौषधमस्ति, परन्तु शृंगाररसस्य यादृश उन्मुक्तः प्रयोगो विहितो न मह्यं रोचते। तत्राश्लीलता साक्षाद् दृश्यते। सावधानतयाकर्णय।

श्रीहर्षनमस्कृत्यदमयन्तीं नलं नृपम्।

दृष्टं वर्ण्यते मित्र नैषधेऽश्लीलवर्णनम्।।

अहो संस्कृतकवीनामुच्छृङ्खलता! सम्भवतः कवीनां स्वान्तष्यं सङ्कोचयन्नेव साहित्यशास्त्रकारैर्नियमः कश्चनाविष्कृतः। अनियमानामेव नियमनाय रसाभासः कल्पितः—

अनौचित्यप्रवृत्तस्य आभासो रसभावयोः।

उपनायकसंस्थायां मुनिगुरुपत्नीगतायां च।

बहुनायकविषयायां रतौ तथानुभयनिष्ठायाम्।।

आचार्यविश्नाथो धन्यो यो हि मुनिगुरुपत्नीविषयकरतिवर्णनमनौचित्यं मनुते। यदि कश्चिद् ब्रूयात् यत् नलो न मुनिनैव च गुरुरतो नात्र दोषो रतिवर्णने। परन्तु श्रीहर्षेण स्वयमेव यादृशं रूपं नलस्योपकल्पितं तेन तु नलस्य देवत्वं सिद्धयति।

किञ्च काव्यदोषेऽश्लीलदोषोऽपि दर्शितो यथा—

पदांशगताश्लीलतामाविष्करोति मम्मटाचार्यो ब्रूते च

अतिपेलवमतिपरिमितवर्णं लघूतरमुदाहरति शठः।

परमार्थतः स हृदयं वहति पुनः कालकूटघटितमिव।।

पेलवशब्दस्यैकदेशमधिकृत्य व्रीडाव्यंजकाश्ललीत स्वीक्रियते। अत्रैव तेनाचार्येण अश्लीलताजन्यविसन्धिदोषनिरूपणावसरे पद्यमेकमुदाहरति। तद्यत्—

वेगादुड्डीय गगने चलण्डामरचेष्टितः।

अयमुत्तपते पत्री ततोऽत्रैव रुचिङ्कुरु।।

विसन्धिदोषेऽस्मिन् द्वितीयपादस्थलण्डाशब्दस्य किञ्च चतुर्थपादीयचिङ्कुपदस्य च क्रमाल्लिंगयोनिसूचनाद् दोषो मन्यते। विचार्यताम् आचार्या अज्ञायवयनामग्रहे न सहमतिं

दर्शयन्ति, परन्तु कवयस्तु तान्नियमान् दूरीकृत्य स्वातन्त्रा न विरमन्ति वणयन्त्येव यथेच्छमवर्णनीयम्। अवलोक्यतां महाकविनोपाधिना विभूषितः कालिदासः शृङ्गारवर्णने कियान् रुचिमान् दृश्यते। अत्यल्पमप्यवसरमाकलय्यासौ त्वरितमेव स्वमनोगतभावान् प्रकटीकरोति। मेघदूते तु–

प्राप्तास्वादो विवृतजघनां को विहातुं समर्थः।

अथ च शाकुन्तले तु 'रक्षितव्या खलु प्रकृतिपेलवा' प्रियसखी 'चूतेन संश्रितवती नवमालिकेयमस्यामहं त्वयि च सम्प्रति वीतचिन्तः। अश्लीलशब्दप्रयोगेण किं वर्णयितुमीहते न जाने। शाकुन्तलं पाठयता क्रियते शब्दविपर्ययोऽस्माभिरिति द्वयस्यापि प्रायशः। चूतशब्दस्य हि पश्चिमोत्तरप्रदेशे वान्यस्मिन् भागे योनिवाचकत्वात् प्रतिविद्यार्थिपरिबोधविषयत्वाच्चेति।

बहव एतादृशा अपि सन्ति संस्कृतजगति ये श्रुत्वेदं कुपिता भविष्यन्त्येव मयि तथापि न कापि हानिः। इदमेव दृष्ट्वा खिन्नमना आचार्य आनन्दवर्धनो ध्वन्यालोके स्पष्टयति यत् प्रतीयमानं ध्वनितत्वन्तु शरीरावयवातिरिक्तं किञ्चिदपरं युवतिजनलावण्यमिवास्ति। यथा–

प्रतीयमानं पुनरन्यदेववस्त्वस्ति वाणीषु महाकवीनाम्।

यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।

अत्र विमृष्टं यच्छरीराङ्गवर्णनं न ध्वनिः, शरीरावयवानां मूर्तपदार्थत्वात् ध्वनेश्चामूर्तभावरूपत्वाच्चेति। लावण्यं भावरूपं न द्रव्यरूपम्। काव्ये चारुतानिवेशनाय लावण्यमिव ध्वनिराविष्करणीयो न तु कुचादयः शरीरावयवाः दर्शयितुं प्रयासो विधातव्यः। आनन्दवर्धनो निगदति कालिदासविषये यत्–

तथाहि महाकवीनामप्युत्तमदेवताविषयप्रसिद्धसम्भोगशृङ्गारनिबन्धनाद् अनौचित्यं शक्तितिरस्कृतं ग्राम्यत्वेन न प्रतिभासते। यथा कुमारसम्भवे देवीसम्भोगवर्णनम्।

यद्यपि अत्र श्रीमतानन्दवर्धनेन महाकविः कालिदासो ग्राम्यदोषाद् वारितस्तथापि अनौचित्यमित्युक्तमेव। नेह कुमारसम्भवगतवर्णनमिहाविषयत्वेन प्रस्थाप्यते नैषधीयस्यैव वर्ण्यविषयत्वादिति।

श्रूयते यन्महाकविर्देवीसम्भोगवर्णनानन्तरं कुष्ठी संजातस्तन्निवारणार्थं स रघुवंशं विरच्य मुक्तोऽभवदिति। मयूरभट्टस्यापि वृत्तान्तो न कस्यापि दृष्टेरविषयः।

अनेन महाशयेन तु स्वभगिनीं प्रति अश्लीलपद्यपठनाद्दुःखमवाप्तंपद्यांश्चायमस्ति—कुचप्रत्त्यासत्त्या हृदयमपि ते चण्डि कठिनम्।

तन्निवृत्त्यर्थं च सूर्यशतकमरच्यतेति विदन्ति विज्ञाः। काव्यं सहृदयहृदयाह्लादकं रचनीयं नैव नारीणामङ्गावयवानामुन्मुक्तवर्णनेनानन्दवाप्तिः। किञ्च काव्यप्रणयनस्य प्रयोजनं शिवेतरक्षतिर्न तु शिवेतरावाहनमिति मम्मटेन न कथितम्? मन्यतां कालिदासो मयूरभट्टश्चोभावपि मम्मटपूर्ववर्तिनौ, किन्तु महाकविः श्रीहर्षस्तु समकालिकोऽस्याचार्यवरस्येति। किं नालोचितमनेन काव्यप्रकाशतत्वम्?

मम्मटश्रीहर्षविषयिणीं किंवदन्ती नेह ममाभीष्टविषयः। अतो नेह प्रतन्यते सा, कस्यचिद् विदुषो जल्पनमिति मत्वा।

नैषधीयमहाकाव्यं परमविदुषा श्रीहर्षेण विरचितमवाप्यते। अत्र नलदमयन्त्योः प्रेमवर्णनमेव कवेर्लक्ष्यमवलोकितम्। अतोऽसौ प्रतिपलं शृङ्गारवर्णनाय व्याकुलो दृश्यते। हन्त! येन केन ब्याजेन स्वमनोभावं प्रदर्शयत्येव। तावद् भा भारवेर्भाति यावन्माघस्य नोदयः। उदिते नैषधे काव्ये क्व माघः क्व च भारविरित्यपि नैषधकाव्येन साकं श्रीहर्षं प्रशंसति। किञ्च नैषधं विद्वदौषधमपि श्रीहर्षस्य वैदुष्यमेव प्रकटयति। सत्यमपि सर्वमिदमाभाति परन्तु, यादृशी अश्लीलतात्र दृष्टा सा तु महाकवेः श्रीहर्षस्य कवित्वं दूषयतीव।श्रीहर्षेण पवित्रकथानको महाभारताद् गृहीतः। यस्य स्मरणेन कलिनाशो भवति। यथा—

कर्कोटस्य नागस्य दमयन्त्या नलस्य च।

ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाशनम्।।

स्वयमपि श्रीहर्षो मनुते यत् नलदमयन्तीकथेयं पापमलाक्षालनतत्परा। तेनोक्तमादावेव—

पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयैव तत्कथा।

कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति।।

पद्येनानेन नलं प्रति श्रीहर्षस्य श्रद्धाभावः प्रकटीभवति। तस्मादवश्यमेव नलो गुरुरूपो न कस्मान्मन्यताम्? अस्यामवस्थायां केवलं तन्नाम्ना विमुक्तशृङ्गारवर्णन—मौचित्यपरमथावानौचित्य—परमिति स्वयमेव समालोचकैः परिशीलनीयम्। अहन्तु वर्णविन्यासमातन्वानो नो दोषं महाकवेराविष्करोमि। अपितु शास्त्रसम्मतं विभावयामि

संस्कृताक्षरैरिति। अस्तु ममाभिधानीयं नेदमपितु नैषधेऽश्लीतान्वेषणमिति, तदेव वर्णयामि। दृश्यते यद् बहुभिराचार्यैः शरीरावयवानां वर्णनं काव्ये सुमतम्। यथा—

वेणीधम्मिलसीमन्तभालश्रवणनासिकाः।

कपोलाधरनेत्रभ्रूकटाक्षदशनोक्तयः।।

कण्ठबाहुकरोरौजनाभ्योर्मध्यं वलित्रयम्।

रोमालिश्रोणिजङ्घोरुगतिक्रमनखाः क्रमात्।।

परन्तु वर्णनमिदं न गुरुमुनिदेवताविषयकमुचितमिति मत्वा रसाभावाभासो मतः। श्रीहर्षः सहर्षं दमयन्त्याः प्रत्यङ्गं तृतीये सर्गे सप्तमे च सविस्तरमवर्णयदिति नैषधाध्येता को न जानाति? नैतदिह दर्श्यते। मान्याः यद्धि तेन षष्ठे सर्गे कृतं तत्त्वश्यमेव महाकवेरनौचित्यं द्योतयति। बहुधाात्मानं ततोनिवार्यमाणोऽप्यात्मनाहं न विलेखितुं जहामि। अतः श्रीहर्षमभिवाद्य नैषधगतमश्लीलांशमव—

गुण्ठनवन्निजमहिलाजनमिहावगुण्ठनरहितं करोमि।

षष्ठे सर्गे राजप्रासादं गतो नलोऽदृश्यरूपस्तेन महाकविना कथंमेवं विधनिन्दनीयकर्मणि नियुक्तः? नैव परिज्ञायते। यं नलं पूजिलं मन्यते तमेवान्तःपुरं सम्प्रेष्य परस्त्रीणां शरीरावयवान् दर्शयति। हन्त! अवलोक्यतां पद्यमिदम्—

अन्तःपुरान्तः स विलोक्य वालां कांचित् समालब्धुमसंवृतोरुम्।

निमीलिताक्षः परया भ्रमन्त्या सङ्घटमासाद्य चमच्चकार।।

अर्थाद् अन्तःपुरमुपस्थितो नल उद्ववर्तनार्थं विवृतजघनां यां कामपि वालां विशेषेण दृष्ट्वा अपरया कयाचिद् वालया सङ्घर्षं स्पर्शमनुभूय चकितो भवति। निमीलिताक्षपदेन शृङ्गारातिरेको ध्वन्यते न तु ततो निवृत्तिर्विलोक्यपदोपलब्धेर्महाभारतेऽपि प्रसङ्गस्यास्यानवाप्तेश्चेति। आदर्शपुरुषो नैतत्कर्तुं प्रभवति। श्रीहषेण नलो बलान्नियोजित इति ब्रवीमि। किं नात्र असंवृतोरुपदमश्लीलतामभिसूचयति?

किं च स्तनं वर्णयन् ब्रूते—

पश्यन् स तस्मिन् मरुतापि तन्व्याः स्तनौ परिस्प्रष्टुमिवास्तवस्त्रैः।

अक्षान्तपक्षान्तमृगाङ्कमास्यं दधार तिर्यग्वलितं विलक्षः।।

अर्थादन्तःपुरे वायुना कुचस्पर्शकामनया सुन्दर्याः स्तनावनावृतौ, अथ च

नल: पश्यन् स्वमुखं ततोऽवारयत्। अत्रानावृतस्तनवर्णनं किमश्लीलतां न दर्शयति? अत:परमग्रेऽवलोक्यताम्। महाकविश्रीहर्षो वर्णयति कचकलापसज्जरताया: कस्याश्चिद् भुजमूलं तत:कुचानुलेपनम्, किञ्च मृदुलपिनद्धेन कंचुलिकाया दृश्मानो नाभिदेशम्, क्रमात् पश्यन् नलस्ततस्स्वदृष्टिमपसारयति। मान्या:! किं नलेनान्त:पुरगतेनेदं दर्शनीयमुचितमनुचितं वा विचारयन्तु। अत्रानुलेपनकुचावलोकनं नाभिदेशदर्शनं चोभयमश्लीलतासूचकं प्रतीयते? नात्रैव विरमति महाकवि:, असौ तु कामोद्रेकतां प्रकटयन् नलो निषिद्धे कर्मणि नियोजयति। तदिदमाकर्ण्यताम्–

सङ्घटयन्त्यास्तरसात्मभूषाहीराङ्कुरप्रोतदुकूलहारी।

दिशां नितम्बं परिधाप्य तन्व्यास्तत्पापसन्तापमवाप भूप:।।

अत्रान्त:पुरेऽदृष्टो नलो हीरकमाभूषणधारी तदाभूषणकोणभागेन आगच्छन्त्या: कस्याश्चित् सुन्दर्या: दुकूलं धृतम्, दुकूलमोचनतत्परा सा नितम्बेन दिगम्बरा बभूव। ततश्च नलो नितम्बदेशो वस्त्रेण परिधाप्य सन्तापमनुभूतवान्। नग्ननितम्बप्रदर्शनं किं महाकवे: कीदृशं भावं व्यनक्ति? नूनमेतदश्लीलवर्णनं मद्दृष्ट्या।

विंशे सर्गे नलदमयन्तीसंवादे तु महाकविना स्वसुकवित्वमेवादर्शि, तदिमवलोक्यताम्!

यच्चुम्बति नितम्बोरु यदालिङ्गति च स्तनौ।

भुङ्क्ते गुणमयं तत्ते वास: शुभदशोचितम्।।

अत्र वस्त्रब्याजेन नितम्बस्तनादिशरीरावयवानां वर्णनमश्ललीतामुपकल्पयति। नात्रैव विरमति महाकवि: कामसन्तपतप्तं नलं वर्णयन् स लिखति चाग्रे–

लीनचीनांशुकं स्वेदि दूरालोक्यं विलोकयन्।

तन्नितम्बं स निश्श्वस्य निनिन्द दिनदीर्घताम्।।

दर्शयति श्रीहर्षो नितम्बं किञ्च मदनदह्यमानहृदयेन नलेन दिवसोऽयं कदा गमिष्यतीति जल्पयति। नैततदस्ति अश्लीलतासूचकं किं भो! धन्यो महाकविरयं श्रीहर्षो यो हि पूजनीयो नलोऽनङ्गपीडापीडितो दमयन्तीमालिङ्गालिङ्गेति

प्रवदन् नैषधे दर्शितः।. तद्यत्–

आलिङ्गालिङ्ग तन्वङ्गि मामित्यर्द्धगिरं प्रियम्।
स्मित्वा निवृत्य पश्यन्तीं द्वारपारमगादसौ।।

अहो विज्ञापयनीयमिदं विज्ञापयामि सुमतो नल आत्मज्ञानी नैषधे तद्यत्–

आत्मवित्सह तया दिवानिशं भोगभागपि न पापमवाप सः।
आहृता हि विषयैकतानता ज्ञानधौतमनसं नलिम्पति।

कथं श्रीहर्षो नल एवंरूपो दर्शित इत्यस्य प्रश्नस्योत्तरं नैव लब्धुं शक्यते। अनुमिनोमि यदयमत्राष्टादशसर्गे कामवर्णनमभिलषितवान् स्यात्। तन्मनसि नलस्य गौरवपदमुपागतं भवेत्। तद्विचार्य नलस्य प्रशंसनीयपदरक्षणाय कदाचिदिदं तेन कृतं स्यात्। परन्तु आत्मज्ञानिनो न विषयभोगे व्याकुला अवलोकिताः। तत्रापि स्त्रीरतिसुखावाप्तये पुनः पुनः पिपासुतया नलश्चित्रितः न तन्मनोज्ञम्। अयमात्मवित्तु कियान् कामाभिलाषी वर्तते इति समुल्लिखेतुमपि नाहं समर्थोऽस्मि। कामातृप्तिदर्शनादस्य कुत आत्मज्ञानत्वम्। मन्ये स्वयमेव निजकामशास्त्रबोधो दर्शितस्तेन महाकविना नलब्याजेनेति। अन्यथा न कदापि आत्मज्ञानी क्वचिदपि विधिवद् रतिसुखाकांक्षी दृष्टः, रत्यादिविषयपरित्यागेवात्मज्ञानोपलब्धेः। नैवाचरति कश्चिदिह आत्मवेत्ता–

मिश्रितोरु मिलिताधरं मिथः स्वप्नवीक्षितपरस्परक्रियम्।
तौ ततोऽनु परिरम्भसम्पुटे पीडनां विदधतौ निदद्रतु।।

न मया दर्शनविद्यार्थिना क्वचिदपि शास्त्रे आत्मवित् कुचमर्दनव्यस्तो दृष्टो नैव चाधरपानाभिलाषी विलोकितः। अयं कीदृश आत्मज्ञानी यो हि दिवसे रतिकामनया पीडितो दृष्टिमार्गे आगच्छति। अयन्तु सर्वदा सर्वत्र अतृप्तकामः कुतः आत्मज्ञानी भोः।

यद्यपि श्रीहर्षेण नलमुखादिदमुद्घोष्यते यद् वर्णनमिदमनौचित्यपरं तथापि का विवशता यद्वशात्तेनैवं कृतम्। यथा–

अहो अनौचितीयं ते हृदि शुद्धेऽप्यशुद्धवत्।
अङ्कः खलैरिवाकल्पि नखैस्तीक्ष्णमुखैर्मम।।

अहो सत्यमाह महाकविः स्वदोषं परशिरसि कुर्वाणो मेघदूते–

कामार्त्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु।

किमहं कथयानि परस्य काव्ये दोषदर्शी काव्यतत्त्वज्ञो महान् मम्मटोऽपि स्वविषयविवेचनाय काव्यप्रकाशे कीदृशमुदाहरणं प्रदत्तवानिति न कस्यचिदपि दृष्टेरविषयः। असौ तु सामाजिकीं व्यवस्थामेव दूषयन् ब्रवीति काव्यपरिभाषोदाहरणावसरे—

यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपाःइति नाहमतः परं वक्तुमभिलाषामि सर्वजनहृदयनिहितत्वादस्य विश्रुतस्योदाहरणस्येति। अन्ते महाकवीन् साहित्यविदश्च प्रणमन् विरमामीति।

मित्रवर! द्वितीये निश्श्वासे स्वगुरुनामसंकीर्तनं कृतं, तेषां विरचितं सुरभारतीसंदेशाख्यं काव्यं तु महनीयं विजानामि, किं तैरभिनवं किमपि काव्यं लिखितम्?तद्विषये प्रोच्यताम्।

आं श्रूयताम्, लिखितं मदीयेन गुरुणा "अद्यापि" नाम काव्यं तद्विषयेऽधुना ब्रवीमि।

सौभाग्यमस्य सुविशालभारतदेशस्य यत्र ऋषयो मर्हषयो मुनयश्च जनिं लेभिरे स्वदिव्यज्ञानप्रकाशेनाज्ञानान्धकारस्य विनाशं चक्रुश्च। अत्रैवागणिता वीरा अग्रेलदासताशृङ्लोचछेदका आत्मोत्सर्गं विधाय वीरगतिमाप्ताः। बहवश्चिन्तका ये अङ्ग्रेजीभाषाप्रचारस्य मुख्यं प्रयोजनं भारतीयताया लोप इति विज्ञाय सांस्कृतिकाध्यात्मिकमूल्यसंरक्षणाय संस्कृतमेव वरमिति चिन्तयन्तः संस्कृतप्रचारकर्म्माणि समर्पितजीवना अभूवन्, तेष्वेव एको महान् दूरद्रष्टा संस्कृतभाषारक्षणवर्धनप्रचार—णकृत्यमेव निजं देशसेवाव्रतमिति धिया प्रयासरतोऽदृश्यताजीवनं सपरिवारः सशिष्यः संस्कृतध्वजोत्तलनं समग्रे भारते विदेशेऽपि कुर्वन् स्वर्गमास्थितः तस्य इह हि को नाम संस्कृतवाङ्मयाध्येता यो नाभिजानीते देवगिरः समुपासकस्य सार्वभौमसंस्कृतप्रचारसंस्थानस्य बिल्हणकविरचितसुप्रसिद्धचौरपंचाशिकालघुकाव्य—प्रयुक्ताद्यापिपदमाधृत्य'अद्यापि'इतिसंस्कृतप्रचारार्थं सम्पूर्णभारत यात्राजनितहर्षविस्मय खेदविविधरसास्वादस्वादुकाव्यस्य प्रणेतुराचार्यवासुदेवद्विवेदिशास्त्रिणः पवित्रमभिधानम्!

वसन्ततिलकाच्छन्दोनिबद्धविविधविषयोपेतपुचाशत्सङ्ख्याधिकश्लोकैर्विरचितमिदं काव्यं सुललितं प्रसादगुणोपेतं वैदर्भीरीतिसमन्वितं मनोहारि प्रियं हृदयाह्लादनक्षमं किञ्च समग्रभारतस्य सांस्कृतिकभौगोलिकाध्यात्मिकैतिहासिकमहत्त्वपूर्णस्थलविबोधकं काव्यस्य प्रयोजनं व्यवहारशिक्षेति प्रतिष्ठापयत्सर्वेषां हृदयान्याहरत्येव। प्रस्तावनावन्दनाप्रकरण

सहितमद्यापिकाव्यमेतदूनत्रिंशदध्याययेषु निबद्धं पाठकानां चेतसि कुतुकं जनयति , यावदसौ सम्पूर्णं काव्यं पठितुं न पारयति तावन्न विरमते।

अद्यापिकाव्यमाचार्यवासुदेवद्विवेदिशास्त्रिणः संस्कृतसाधनायाः प्रबलं प्रमाणं वर्त्तते; यत्र तेन वर्णितं यत् किमर्थं केन प्रयोजनेन काव्यस्य प्रणयनं कृतम्, महामनस्विनोऽस्य महनीयोऽयं विमर्शो यद् देशस्य सर्वाङ्गीणविकासाय सम्पूर्णेऽपि विश्वे सद्भावसंस्थापनाय च केवलं संस्कृतमेवोचितं समर्थं चेत्यसौ ब्रूते—देशस्यसर्वविध—मङ्गलसाधनायै

विश्वे समत्वममतापरिवृद्धये च।
संसाधकं सुरगिरोऽध्ययनं विदित्वा
जातो मदीयहृदये खलु निश्चयोऽयम्।।

अद्यापिकाव्यस्य प्रयोजनं प्रकटयतानेन मनीषिणा प्रोक्तं यन्मया यशोलिप्सया नवार्थकाम्यया नैवात्मतोषाय न चैव जनताहिताय, अपितु विदुषां सम्बोधनाय प्रबोधनाय वेति विलिखितं यत् ते संसारस्य भ्रमणं कुर्युरिति—

केचिल्लिखन्ति यशसेऽपि धनाय केचित्
तोषाय केऽपि कतिचिज्जनताहिताय।
एतन्मया तु लिखितं सकलं बुधाना—
मुद्बोधनाय जगतो भ्रमणं विधातुम्।।

काव्यशास्त्रिणां कृते पद्यमिदमुपादेयं प्रतिभाति यतो ह्यत्र काव्यप्रयोजनविषये विमृष्टमाचार्यवरेण। एतन्मतानुसारं काव्यस्य पंचप्रयोजनम्—

क—यशोऽवाप्तिः, ख—धनलाभः, ग—जनहितम्, घ—आत्मतोषः, ङ—बुधानामुद्बोधनम्। अत्र विमृश्यते यत् किं बुधा अपि बोध्यन्ते? बुधास्तु बोधयन्त्यज्ञानोपहितजनान्। पद्यमेतद्ध्वनयति यद् बुधा अबुधाः सम्भूताः कलिकालप्रभावात्, ते तमोगुणप्राबल्याद्धुना शेरते न देववाणीप्रचाराय यत्नमात्रपि साधयन्तो भोगविलासभवने रमन्ते, तेषां बुधत्वं प्रतिपलं क्षीयमाणं वर्त्तते, ते भ्रमणव्याजेन संस्कृतं प्रचारयन्तु किं वा संस्कृतप्रचारमाध्यमेनदेशस्य दशामवलोक्य दिशं निर्धारयन्तु। बुधानां बोधव्ययेनैव बुधत्वं तिष्ठति। अतस्तानुत्प्रेरयन्नाचार्यो वासुदेवद्विवेदिमहोदयोऽद्यापिकाव्यमरचयदिति।

संस्कृतप्रचारकार्ये एका महती बाधा पण्डितानां हृदि सन्निविष्टा दृश्यते सा जातिविषयिणी बाधा यावन्नापगमिष्यति तावन्नैव संस्कृतं सर्वत्र प्रसरिष्यतीति मन्यमानो भोजनपानगतभेदं विहायाडम्बरं कृत्रिमतां चापहायाभारतभुवं संस्कृतशङ्खनादं नादयन् समोदमगमदिति। असौ स्वयमेव वर्णयन् ब्रूते—

नो जातिवर्णगतभोजनपानभेदो
नैवाग्रहः क्वचन नो कटुता कथंचित्।
नाडम्बरं न खलु कृत्रिमता च काचित्
तस्मादभूत् सुखमयं भ्रमणं सदा मे।।

अत्र सुखमयं भ्रमणमिति पदेन बोधव्यवैशिष्टशधिया संस्कृतप्रचारार्थं कृतं भ्रमणमिति बोध्यं न तु मनोरंजनार्थं कृतं सामान्यं भ्रमणमित्यालोचनीयं विज्ञैः।

अहो! दर्शनीयमिदं साहसं नवतिवर्षवृद्धस्य गुरोर्मे! अस्यामप्यवस्थायां संस्कृतप्रचारप्रसाराय समुद्रस्य भयदाभ्यो लहरीभ्यः सकण्टकेभ्योऽत्युच्चपर्वतशिखरेभ्यो निम्नोन्नताभ्यो वनभूमिभ्योऽपि न बिभेति, अपितु युववद् भ्रमितुमभिलषति। यथा गुरुवचांसि—

अद्यापि सिन्धुलहरीषु भयङ्करीषु
उत्तुङ्गशैलशिखरेषु सकण्टकेषु।
निम्नोन्नोनतेषु वनभूमिषु च प्रकामं
वृद्धोऽपि यौवन इव भ्रमितुं समीहे।।

अद्यापिकाव्यग्रन्थस्य वन्दनापद्येषु स्पष्टं लक्ष्यते यत् संस्कृतभाषायाः समुद्धारकोऽयं विद्वान् सर्वधर्मान् प्रति समभावं प्रकटयति। आचार्यः—ईशदेवदेवीधरणी—धर्मभारतदेशरामयणमहाभारत भागवतश्रीमद्भगवद्गीतर्षिमुनिमहर्षिशुकदेवशुकनाशपाणिनि जैनबौद्धदिव्यपुरुषतत्त्वविदाचार्यभरतचाणक्यशङ्कराचार्यकविसूक्तकार—विष्णुशर्म्मसाधुसन्तदेवोपमपुरुषसंस्कृज्ञमुस्लिममहीपतिवैदेशिकसंस्कृतविद्वत्संस्कृतोद्धार कानुवादकसंस्कृतप्रशंसकान् क्रान्तिवादिपण्डितशिल्पकलाविदो वैज्ञानिकान् वैदेशिकान् दुष्करकार्यकर्तॄन् भारतीयस्वतन्त्रतासङ्ग्रामसैनिकश्रमिकान् संस्कृतसमालोचकाश्रयदातॄंश्च वन्दते। अयं समभाव इयं च दूरदृष्टिः सर्वेषामपि संस्कृतज्ञानामावश्यकमिति ध्वनितार्थः।

आचार्यवरस्यास्मद्गुरोरेका घटना अद्यापिकाव्ये वर्णिता, यत्र ग्रामं गच्छन्नेकस्मिन् समाचारपत्रेण संस्कृतसम्मेलनमिति विज्ञाय यात्रां निरुध्य गाजीपुरसम्मेलनस्थलमुपागतः। यदा जना ज्ञातवन्तो यत्संस्कृतभाषायां भाषणं भविष्यतीति भृशं मुदिताः समभवन्। ये निरक्षरास्तेऽतीव प्रसन्नाः संजाताः शिक्षितास्त्वानन्दिता एवासन्। तदिदं पद्यम्—

अद्यापि मार्गगतसूचनयोपलब्धं

गाजीपुरीयसुरवाक्समितिं स्मरामि।

ग्राम्या निरक्षरजना अपि यत्र दैवीं

श्रोतुं गिरं सभृशमाकुलिता अभूवन्।।

घटनैषा महर्षिपाणिनिसम्मतस्य 'तथायुक्तं चानीप्सितम्' इत्यस्य 'ग्रामं गच्छन् तृणं स्पृशति' इत्युदाहरणस्य कदाचित्खण्डनं कुर्वत्यवलोक्यते। गुरुवरस्य गृहयात्रा मुख्यं कर्म्म वा संस्कृतसम्मेलनयात्रा मुख्यं कर्म्म? मम मते संस्कृतप्रचारशीलस्य मुख्यकर्म संस्कृतप्रचार एव, परन्तु अस्मत्कृते गृहयात्रा मुख्यकर्म्म सम्मेलनयात्रा तु गौणकर्मेति सुप्रसिद्धम्। इदमेव वैशिष्ट्यं द्विवेदिमहोदयस्य यद्वशादवनतमुखा विवृतवदना विस्फारितनयना इवजायन्त इतरे स्वार्थिनः संस्कृतज्ञाः। वयन्तु निमन्त्रणपत्रं भाटकमुज्ज्वलमुत्तरीयं सुखदमावासमभिलषामोऽन्यथा किमनेन संस्कृतेन!

संस्कृतस्य प्रचाराय महर्षिदेवरहाबाबामहोदयस्य वक्तव्यं यदध्यापकाः कस्मिंश्चित्प्रकोष्ठे स्थित्वा द्वित्रान् त्रिचतुरान्वा छात्रान् तूष्णीं पाठयन्ति परं संस्कृतप्रचारार्थं प्रयत्नं न कुर्वन्ति। यावदिमे सङ्घबद्धाः सन्तः संस्कृतस्य महत्त्वं सर्वान् जनान् न बोधयन्ति न तावत्संस्कृतप्रचारो भवितुं शक्नोति। संस्कृतज्ञा मार्गे चतुष्पथे पों पों कृत्वा प्रचारं कुर्वन्तु संस्कृतस्येति भावं स्पष्टमुल्लिखन्नाचार्यो ब्रवीति यत्—

एकान्तवासमपहाय पथेषु पों पों

कुर्वन्तु पण्डितजनाः खलु सङ्घबद्धाः।

एषा महर्षिवरदेवरहासदुक्ति—

रद्यापि मन्मनसि कौतुकमातनोति।।

अद्यापिकाव्ये आचार्यवासुदेवद्विवेदिमहोदयः घटनाव्याजेन प्रकटयति यत् पण्डिता अलसाः, निरुत्साहाः, द्रव्यव्ययभीत्या सम्मेलनानि नोपसर्पन्ति। एतत्सन्दर्भे तेन विहारप्रदे—शीयसीतामढीसम्मेलनस्योल्लेखः कृतः, यत्र मुख्यमन्त्री संस्कृतज्ञानामल्पसङ्ख्यामावलोक्य

कुपित इवाभवत् स्वयमाचार्यवरोऽपि खिन्नो जात आसीदिति निम्नलिखितपद्येन ज्ञायते—

सीतामढीतिननगरे समितौ महत्यां
दृष्ट्वाल्पतां सुरगिरः समुपासकानाम्।
श्रीमुख्यमन्त्रिण उदासनिराशमास्य—
मद्यापि रोषकलुषे च दृशौ स्मरामि।।

श्रीमद्वासुदेवद्विवेदिकविविरचितस्याद्यापिकाव्यस्य वर्तमानयुगे महती प्रासङ्गिकतानुभूयते। असौ संस्कृतप्रचारसेवी सर्वदैव व्यग्रो दृश्यते संस्कृतवाङ्मयरक्षायै कामयतेऽपि यत् ये संस्कृतभाषावृत्त्युपजीविनः पण्डिता आचार्याः पुरोहिता मठाधीशाः संस्कृतप्रचारसमर्थविद्वांसस्ते सर्वेऽनेकान् पीडाकरान् तापान् सोढ्वापि मूर्खजनप्रलापानविग—णय्य अपमानं पुरस्कृत्य शीते आतपे झंझावाते ग्रामे—ग्रामे, नगरे—नगरे, संस्कृतप्रचारं कुर्युः। अद्यापीदं शिक्षयति यत् यथा अद्यतनाः पण्डिताः सन्ति ये द्वित्राणि पदानि पद्भ्यां गन्तुं नाभिलषन्ति, महार्घमुत्तरीयमपेक्षन्ते, मधुरं कामयन्ते मिष्टान्नं स्वादु अप्राप्य दुर्वाषावत् सक्रोधं प्रलपन्ति, आयोजकान् निन्दन्ति कलहायन्ते चेति। ते एवं न कुर्युः। अपितु संस्कृतज्ञाः संस्कृताय जीवनमर्पयेयुः। नालसा भवेयुः, संस्कृतप्रचारपुनीतकर्म्मसम्पूर्तौ मानापमाने परिहृत्य कृतसङ्कल्पा बद्धकक्षा भूत्वा भूरिशो यशांसि लभमाना जीवन्त्विति।

धन्यस्त्वमसि सुहृद्वर! भूरिशो धन्यवादं प्रयच्छामि।

विज्ञापय, वैदिकी शिक्षा या हि प्राचीना शिक्षा कीदृशी श्रुतेति तत्त्वतो ज्ञातुमभिलषामि।

अये नूनं भवानद्वितीयो जिज्ञासुः। श्रूयताम्।

शिक्षा मानवानामभ्युन्नतौ मूलं कारणमस्ति। यां विना न कश्चिदपि विकासं लब्धुंशक्नोति। आदिकालादेव मानवीयां जीवनपद्धतिं सुदृढां विधातुं शिक्षा समुद्भाविता मुनिभिः।

वैदिकी शिक्षा अध्यात्ममूला यत्र सर्वथा नैतिकगुणा एव शिक्ष्यन्ते स्म। यद्यपि विद्या, ज्ञान, विज्ञानम्, शिक्षा अधिगमश्चेति पर्यायावाचिनश्शब्दा प्रायशः समार्थवाचका एव मन्यन्ते, तथापि प्राचीनशिक्षापद्धतौ ज्ञानं पृथक् विद्या च पृथगिति दृश्यते मन्दबुद्धिना मया। मन्ये विद्यायाः स्थानं शिक्षायाः श्रेष्ठमस्ति। तैत्तिरीयोपनिषनिषदि शिक्षां परिभाषमाण ऋषिर्वदति यत्

शीक्षां व्याख्यास्यामः। वर्णः स्वरः। मात्रा बलम्। साम सन्तानम्। अत्रैव वेदाध्ययनान्ते दीक्षान्ते वा गुरुर्नैतिकज्ञानं प्रददानो ब्रूते—

सत्यं वद। धर्मं चर। स्वध्यायान्मा प्रमदः। आचार्याय प्रियधनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः।मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव। अतिथिदेवो भव। अस्मिन्नेव क्रमे आचार्यो जीवनोन्नतये शिक्षयति यत्र कर्मविचिकित्सा वृत्तविचिकित्सा वा भवेत् तत्र ये अलूक्षाः समर्शिनो ब्राह्मणा ये यथा वर्तेरन् तथा वर्तेथाः। अनेनैव प्रेरितोऽलिखत् कश्चित्' महाजनो येन गतः स पंथाः।' इयमासीत्प्राचीना शिक्षा वैदिकी वा। याद्य विलुप्यते। प्रोच्यते च 'द्वे विद्ये वेदितव्ये परा चैवापरा चेति।' अत्र परा वेदचतुष्टयरूपा षडंगसहिता अपरा यया परमतत्त्वं मोक्षोऽक्षरं ब्रह्म वा लभ्यत इति समुपदिष्टं मुण्डकोपनिषदि। भगवता श्रीकृष्णेन श्रीमद्भगवद्गीतायां सुस्पष्टमेव प्रोक्तम्' अध्यात्मविद्या विद्यानाम्। वेदचतुष्टयं पडंगानि धर्मः मीमांसा न्यायः पुराणं चेति चतुर्दशविद्याः श्रूयन्ते येन श्रेयः प्रेयश्च प्राप्नोति पुरुषः। परन्त्वासु अध्यात्मविद्या श्रेष्ठा वर्तते। इमाः सर्वा अपि विद्याः प्राचीनकाले गुरुकुले प्रदीयन्ते स्म। तत्र हि उपनयनान्ते पुत्राः स्वाभिभावकैः प्रेष्यन्ते स्म।

गुरुकुलं गतो वटुकः ब्रह्चर्यपालनं कुर्वन् शिक्षां लभते स्म। तत्र शिष्याः काकवच्चेष्टन्ते स्म, वकवद्धयायन्ति स्म, कुक्कुरवच्छेरते स्म, अल्पाहारं गृह्णन्ति स्म गृहाद् दूरं गत्वा गुरुकुलमाश्रयन्ते स्मेति। श्रूयते पद्येनैकेनेति—

काकचेष्टा वकध्यानं श्वाननिद्रा तथैव च।

अल्पाहारो गृहत्यागो विद्यार्थिपंचलक्षणम्।।आसीदस्य महत्त्वं यद्वशात् शिष्या महान्तो भवन्ति स्म। गुरुकुलेऽनुशासनं मुख्यमासीत्। अहंकारादीनां दुर्गुणानां विनाशायेमे गुरुणा भिक्षावृत्तौ नियुज्यन्ते स्म, शिलोंच्छवृतित्तरपि आचर्यते स्म। वनादाहरन्ति स्म यज्ञार्थं पलाशादिकाष्ठानि। अत एव तु प्रोक्तं '' रिक्तपाणिर्न गच्छेत्तु शिष्यः स्वगुरुसन्निधिम्।'' ''समित्पाणिः श्रोत्रियो ब्रह्मनिष्ठः।'' इत्यपि वचनं गुरुशिष्यपरम्परां द्रढयत्येव। दक्षिणार्थं गुरुर्नाधिकं द्रव्यं याचते स्म। दक्षिणायां दीयमानं धनं दानाय प्रेरकं भवति स्मेति मन्ये।विज्ञातमेव जनैर्यत् स्वामिदयानन्दोऽपि स्वगुरवे लवंगद्वयं गुरुदक्षिण ।स्वरूपं दत्तवानासीत्।

गुरुरपि त्रिकालसन्ध्यां कुर्वन् च शिष्यस्य सर्वांगीणविकासाय ईश्वरं प्रार्थयते यत्—

सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।

तेजस्विनावधीतमस्तु मा विद्विषावहै।

भवतु नाम नृपपुत्रः गृहस्थपुत्रो वा गुरुकुले समानव्यवहारो दर्श्यते स्म। भगवान् श्रीरामो गतो विश्वामित्रवशिष्ठाश्रमं झटित्येव सकलां विद्यामधिगतवानासीदिति श्रूयते–

गुरुगृह गये पढ़न रघुराई, अल्पकाल विद्या सब पाई।।

एवमेव प्रकारेण श्रीकृष्णोऽपि सान्दीपनीमुनेः गुरुकुलं गतः सुदामप्रभृतिमित्रैस्सह विद्यामगृह्णात्। पुराकाले प्रयागे महर्षिभरद्वाजस्य गुरुकुलमासीत् यत्र दशसहस्रमिताः विद्यार्थिनोऽधितनो दृश्यन्ते स्म। नालन्दागुरुकुलमपि वरमेव यत्र पाणिनिप्रभृतयो महान्तो वैयाकरणाः अभूवन्। महान् नीतिज्ञश्चाणक्योऽपि गुरुकुले एव शिक्षां प्राप्तवान्। मित्र! साररूपेण वक्तुं शक्यते यत् प्राचीना वैदिकी शिक्षा अध्यात्मप्रधाना आसीत् यत्र त्यागो दया स्नेहः औदार्यं शुचिता सच्चरित्रता परोपकारिता च शिक्ष्यन्ते स्म याभिर्मानवानां जीवनं सुखमयं शान्तिमयं च भवति स्म।

तत्र मातृवत् परदारेषु परद्रव्येषु लोष्ठवत्।

आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः।

इति नैतिकगुणप्रधाना शिक्षा आसीत् यस्या विलोपः अनर्थं जनयन् वर्तते।हन्त! प्रतिदिनं नारीबलात्कारः परधनापरहणरूपा घोटाला हवाला इति दृश्यन्ते एव। अहन्तु अत्र वैदिकशिक्षायाः ह्रासं कारणं मन्ये। इदमपि विज्ञातव्यमेव यत्कालान्तरे गुरुकुलेष्वपि कस्माच्चित्कारणात् न सर्वे पाठ्यन्ते स्म, राजपुत्राणां शिक्षा पृथक् सामान्यानं जनानां च पृथगिति एकलव्यकथाश्रवणात्।

तथापि एकलव्याख्यः शिष्यः संजातो महान् धनुर्धर इति को न जानीते? येन गुरोः प्रतिमां संस्थाप्य तन्मनोमयं संकेतितमवाप्य धनुर्विद्यापारंगतः दक्षिणां प्रदातुमुद्यतोऽवलोकितः। किञ्च हन्त! गुरुणा शस्त्रकौशलमभिलक्ष्य स्वार्थवशात् तदीयोऽगुंष्ठो याचित इति दूषयति गुरुकृत्यम्।

परन्तु स शिष्यो धन्यो येन दत्तोऽगुंष्ठः श्रद्धया न तु भिया। परशुरामेणापि द्वेषभावनया क्षत्रियविनाशदृष्ट्या कर्ण द्विज इति मत्व शस्त्रास्त्रविद्यायां पारंगतः कृतः। इत्यपि न वरम्। ज्ञाते कुपितोऽनर्थमकरोदिति नाहं साधु मन्ये। वास्तविकी गुरुकुलीना शिक्षा सर्वेषां कृते आसीत् न तु जातिदेशविशेषाणामिति। पश्चादियमेव

शिक्षा अध्यात्मोन्नतिमपहाय अर्थमूला संजातेति। अतो विनष्टा नैतिकी शिक्षा देशात्। केनचिदर्थाभिलाषेण प्रोक्त।।यत्–

अर्थागमो नित्यमरोगिता च प्रियाच भार्यामृदुभाषिणी च।

वश्यश्च पुत्रोऽर्थकरी च विद्या षड् जीवलोकस्य सुखानि राजन्। न शिक्षकाः सर्वे शिक्षयन्ति छात्रान् मनोयोगात् शिक्षालयेष्विति न दृश्यते सर्वत्र? किं भविष्यति शिक्षायाः फलमितीश्वर एव जानाति हन्त!। मम मन्तव्यमिदमस्ति यत् काचिदन्या शिक्षाप्रणाली आविष्करणीया, यत्र प्राचीनार्वाचीनशिक्षायाः समन्वयो भवेदिति।

वयस्य! लोके मृषा वचनं प्रयुज्यते सत्यं वेति कथ्यताम्।

श्रूयतां भो मनस्विन्!

मृषा संस्कृतभाषायाः शब्दोऽस्ति यस्य पर्यायवाचिनोऽनेके शब्दा लभ्यन्ते। यथा–असत्यम्, मिथ्या, अनृतम् इति। अयं शब्दः व्याकरणानुसारं सर्वदा विशेषणत्वेन प्रयुज्यते। हिन्द्यां झूठ इति शब्दो बहुधा प्रतिदिनमाकर्ण्यते। एषोऽसौ मनोभावो यः शृङ्गारादिसमस्तरसेषु परिस्थितिवशात्परिवेशवशाद्वा संचरन् दृश्यते एव। अस्याविर्भावस्तिरोभावो वा क्वचिदपि अनायासं सायासं वा द्रष्टुं शक्यते। कल्पना–सम्भावना–व्याज–प्रभृति–शब्दा अपि मृषापर्यायत्वेन यदा कदा गृह्यन्ते।

मम मन्तव्यमस्ति यच्छब्दब्रह्म नैतस्य कदापि विनाशो भवति। अतएव मृषाशब्दोऽपि सनातनो वर्तते। शब्द एषोऽनेकावस्थासु विविधभावाना–मभिव्यंजनार्थ प्रयुज्यते। अभिव्यंजनाशब्दस्य प्रयोगो मया विहितो मम्मटादिकाव्यशास्त्रिभिः वक्तृवैशिष्ट्य–बोधव्यवैशिष्ट्यदृष्टान्ते यदुदाहृतं तत्सर्वमपि असत्यं सच्चित्तमाह्लादतीति नात्र संशयः। अतो दृष्टमिदं यन्मृषावचनं यद्यपि हेयं तथापि प्रबुद्धैरबुद्धैर्वा प्रचुरतयास्य प्रयोगो स्वजीवने कृतः। विमृष्टमपि शास्त्रेषु यत्क्व मृषा वक्तव्यं क्व च नैव प्रयोज्यमिति। यथोक्तम्

न नर्मयुक्तं वचनं हिनस्ति न स्त्रीषु राजन्न विवाहकाले।

प्राणात्यये सर्वधनापहारे पंचानृतान्याहुरपातकानि।।

पद्यस्यास्याशयोऽयमस्ति यत् हास्यकाले स्त्रीप्रसङ्गकाले विवाहे प्राणहानिसमये सर्वधनविनाशकाले च प्रयुक्तं मृषा मृषा न मन्यते। मनुस्मृतावपि कथितं महाभारतीयवचनेन साकं साम्यं भजत एव। यथा–

कामिनीषु विवाहेषु गवांभक्ष्ये तथेन्धने।

ब्राह्मणाभ्युपपत्तौ च शपथे नास्ति पातकम्।।२

अर्थात् स्त्रिया साकं सम्भोगावसरे विवाहे गवादिपशुघासाय यज्ञार्थमिन्धनहेतवे ब्राह्मणानां ज्ञानिनां रक्षार्थं व्यर्थशपथग्रहणे मृषावचनप्रयोगावसरे न भवति प्रयोक्ता पापभागिति। एवमुप्युक्तं यद्धर्मरक्षार्थं यदि मृषा प्रयुज्यते चेद्वक्ता न पापमधिगच्छति, धर्मरक्षायै प्रयुक्तं मृषा वचनं सत्यादपि श्रेष्ठं कथ्यते। अग्रे वदति आचार्यो मनुर्यत् यदि सत्यसाक्ष्यप्रयोगेण कस्यचिदपि मरणं भवति तदास्यां परिस्थितावसत्यमाश्रयणीयम्। एतदसत्यमधिकमुत्तमं सम्मतम्। अयन्तु नीतिपक्षः, अधुना दार्शनिकपक्षो निर्दिश्यते।

वाक्यपदीयं व्याकरणस्य दार्शनिकं स्वरूपं प्रकटीकरोति। महर्षिभर्तृहरिणा प्रोक्तं यत् सांसारिको व्यवहारो न सत्यः, जनैः क्रियमाणो लौकिको व्यवहारस्तु असत्यभूत एव। किन्तु असत्यरूपेण मार्गेण सत्यस्वरूपं ब्रह्म अधिगन्तुं शक्यते। यथा–

असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते।

वाक्यमिदं कियानस्ति गभीरं परन्तु बहूनामवबोधाद् बहिर्वर्तते। मन्ये

असतो मा सद्गमय

इत्यनेन वाक्येन महर्षिर्भर्तृहरिर्ज्ञानमाप्तवान् स्याद्विषयेऽस्मिन् कदाचित्।

समग्रसनातनदर्शनस्य सारभूता श्रीमद्भगवद्गीता तु असत्यस्य भावत्वमेव नाङ्गीकरोति। यथा–नासतो विद्यते भावो नाभावो विद्यते सतः।

आध्यात्मिकग्रन्थाः सत्यं वक्तुं प्रेरयन्ति–सत्यं वद। उपनिषत्सु तु समुद्घोषितं यत् सत्यं जयति नानृतम्। इदमेव विचार्य सम्राडशोकोऽलेखयच्छिलालेखेषु सत्यमेव जयते। महत्त्वपूर्णोऽयं विषयो यस्मान्नीतिज्ञैरुक्तम्–

सत्यं वदेत् प्रियं वदेत् न वदेत् सत्यमप्रियम्।

प्रियं च नानृतं ब्रूयादेश धर्मःसनातनः।।

अन्यैस्तु 'प्रोक्तं सांच बराबर तप नहीं झूठ बराबर पाप।' इति मृषाप्रयोगस्य निषेधत्वं ब्रूते।

हन्त! माननीयैरपि कदाचिदवसरविशेषे परिहासदृष्ट्या मृषावचनं प्रयुक्तमिति दृश्यते। नान्यत्र वाल्मीकिविरचितरामायण एव, यत्र कामातुरा विवाहोत्कण्ठिता शूर्पणखा रामं प्रेरयति। तदा श्रीरामो ब्रूते'

कृतदारोऽस्मि भवति भार्येयं दयिता मम।

तद्विधानां तु नारीणां सुदुःखा सपत्नता।।

अनुजस्त्वेष मे भ्राता शीलवान् प्रियदर्शनः।

श्रीमानकृतदारश्च लक्ष्मणो नाम वीर्यवान्।।

अपूर्वी भार्ययाचार्थी तरुणःप्रियदर्शनः।

अनुरूपश्च ते भर्ता रूपस्यास्य भविष्यति।।

एनं भजविशालाक्षि भर्तारं भ्रातरं मम।

असपत्नावरारोहे मेरुमर्कप्रभायथा।।

अधुना मया साधिता यन्मृषासत्ता वर्तते नेति वक्तुं शक्यते। अतो मृषा भावरूपं मन्यतामस्य सर्वत्रोपलब्धेरिति।

नेदमेवापितु महाभारतमवलोक्यताम्। यत्र 'अश्वत्थामा हतो नरो वा कुंजरः' इति वाक्यं को न जानीते? किं कृतं महात्मना युधिष्ठिरेण, जानन्नपि न मृषा प्रयुक्तम्। अतो निश्चयेन वच्मि यत्–

राजतेऽत्रमृषा मित्र त्रैलोक्येनैव संशयः।

देवे दैत्ये जने प्रायः न कश्चिदपि सत्यवाक्।।

अस्मादेव कारणादुक्तं शङ्कराचार्येण–

संसारोऽयमतीव विचित्रः।।

अधुना इह संसारे केन रूपेण मृषा प्रयुज्यत इति विवृणोमि।

सामान्यजीवनेऽपि जनो महात्मा वणिग्वा कथं प्रतिपदं मृषा वदतीतिन जाने। अद्यतनसमाजे मृषा ते वदन्ति येषां विषये मृषाभाषणस्यावर एव न कैश्चिदपि विचार्यते। एतादृशाननेकान् स्वजनानहमभिजानामि ये सानन्दं मृषा भाषन्ते। श्रूयतां महाभारतीयं वचनमिदं यद्धि दुर्योधनेन प्रयुक्तम्–

जानामि धर्मं न च मे प्रवृत्तिः

जानाम्यधर्मं न मे निवृत्तिः।

केनापि देवेन हृदि स्थितेन

यथा नियुक्तोऽस्मि तथा करोमि।।अयमपि विशिष्टः कश्चिन्मृषावादीति कथं न मन्यताम्। अतोऽहं साररूपेण कथयामि यद् वर्तमानसमाजो मृषाबन्धनेन निबद्धो वर्तते। सत्यमाह वेदान्ते जगत्सत्ताविषये। अधुना पतिपत्नी, पितृपुत्रौ, गुरुशिष्यौ, क्रेतृविक्रेतारौ, श्वश्रूवध्वौ, नेतारः, साधवः भिक्षुकाः वैद्याः समाजसेविनश्च प्रायशो मृषा वदन्ति। मृषा त्वेषां कृते शक्तिदायकः बलवर्धकः पेयपदार्थ इव प्रतीयते। इदं दिव्यमस्त्रपि मन्यते यत्प्रयोगेण सर्वोऽपि जनः वशीक्रियते। हन्त! कदा सत्यमयः समयः!!

सत्यं गदसि मित्र! संसारो विचित्रो वर्तते। किं त्वया श्रीमद्भगवद्गीतायां व्यंजना लब्धा? ब्रूहि ते मुखाच्छ्रोतुकामोऽस्मि। आं मित्रवर! असकृतदालोचिता गीता मया, तत्र व्यंजना या लब्धा ता श्रवणीयाः। शृणु–

कर्मयोगशिक्षयित्री, संसारासारज्ञानकारयित्री, सकलाज्ञानबन्धनखण्डयित्री, सर्वरसागाधसागरमुखाम्बुजोद्भूता श्रीमद्भगवद्गीता भगवदुपदेशव्याजेन प्रसादगुणोपेता, सालङ्कारा वैदर्भीरीतिसंवलिता, वैचित्र्यविवोधकलक्षणाव्यञ्जनाबद्धा, काव्यत्वमुपारूढा सहृदयैरास्वाद्यते। अशेषजनमानसपावयित्रीं साधारणजना केवलमुपदेशदात्रीमिमां मन्यन्ते। उपदेशमात्रप्रदानतत्परायामस्यां श्रीमद्भगवद्गीतायां काव्यतत्त्वान्वेषिणो वयं 'नीरसतरुरिह विलसत्यग्रे' इतिधिया काव्यशास्त्रीयतत्त्वं साक्षात्कुर्मः। अथ चाचार्यमम्मटाभिमतमेव मन्यमानाः सर्वत्र वैचित्र्यमवलोकयामः। मम्मटोक्तं च तत्–'सर्वेषां प्रायशोऽर्थानां व्यञ्जकत्वमपीष्यते'। अनेन वचनेन किं वा 'व्यङ्ग्येन रहिता रूढौ सहिता तु प्रयोजने'२

'यस्य प्रतीतिमाधातुं लक्षणा समुपास्यते।

फले शब्दैकगम्येऽत्र व्यंजनान्नापरा क्रिया।। इतिवचनद्वयेनापि लक्षणायां व्यंजकत्वं पश्यन्तो वयं भगवदुक्तिं परीक्षामहे।

लक्षणायाः प्रतिज्ञावचनं यथा–

मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात्।

अन्योऽर्थो लक्ष्यते यत् सा लक्षणारोपिता क्रिया।।

प्रथमं प्रतिज्ञावचनं मुख्यार्थस्य बाधः, द्वितीयं मुख्यार्थेन साकं लक्ष्यार्थस्य सम्बन्धः, तृतीयं च रूढिवशात्प्रयोजनेन वान्यार्थग्रहणम्। अथ च यत्र अन्यार्थस्याक्षेपः स्वसिद्धशर्थं क्रियते तत्रोपादानं लक्षणा मन्यते। यत्र चान्यार्थाक्षेपाय स्वार्थसमर्पणं तत्र लक्षणलक्षणा स्वीक्रियते।

उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा।।

स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।

लक्षणामूलाशाब्दीव्यंजनायाः प्रथममुदाहरणम्

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत्।

नभश्च पृथिवीं चैवतुमुलो व्यनुनादयन्।।

घोषस्य हृदयविदारकत्वमनुपलब्धं यस्मान्मुख्यार्थबाधः, लक्ष्यार्थः कौरवाणां हृदि भीत्युद्भवः, अनेन मुख्यार्थलक्ष्यार्थयोः कार्यकारणसम्बन्धः स्पष्टमेव। अत्र प्रयोजनवती लक्षणालक्षणा मन्तव्या, व्यदारयदितिक्रियापदं परार्थाक्षेपायअयि महाराज! शङ्खध्वनिरयं प्रचण्डः,यच्छ्रुत्वैव कदाचिद् भवतां पुत्राः स्वस्थानाच्चलिताः, पुनश्च तेषां हृदयानि विदीर्णानि भविष्यन्तीति व्यंग्यार्थः। एवं च धार्तराष्ट्राणामितिपदमपि केवलं तवैव पुत्राणां न त्वन्येषामिति व्यंग्यार्थं बोधयति। अथ च राज्ञोऽभिमुखस्य संजयस्य साहसं त्वत्पुत्रास्त्वत्सदृशान्धा एवेति व्यङ्ग्यार्थः, मामकाः इतिपदार्थावबोधाय ममत्वङ्गतस्त्वं विजानीहि यत् त्वत्पुत्रैस्सह तवापि हृदयं विदीर्णं भविष्यतीति, अनेन ते दुर्बुद्धयो मृत्युं गमिष्यन्तीत्यपि कदाचिद्व्यङ्ग्यार्थः। अन्यथा स घोषस्तव पुत्राणामिति वक्तव्यमासीत्। गूढव्यङ्ग्यालक्षणायामस्यां माननीया। वक्तुः संजयस्य वैशिष्ट्यवशादेव व्यङ्ग्यार्थोऽयं चमत्कारतामेति।

लक्षणामूलाशाब्दीव्यंजनाया द्वितीयमुदाहरणम्—

येषामर्थे कांक्षितं नो राज्यं भोगाः सुखानि च।

त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।।

प्राणांस्त्यक्त्वा इमेध्वस्थिता युद्धे इत्यत्र मुख्यार्थस्यास्य बाधः प्राणरहितस्यावस्थितेरसम्भवात् निगर्ते प्राणे क्रियाशून्यत्वदर्शनाच्च। भाविकालकवलितत्वं लक्ष्यार्थः, अनयोः सामीप्यसम्बन्धः, प्रयोजनवतीलक्षणा चेयं लक्षणलक्षणतां गता गूढव्यङ्ग्यार्थसंवलिता धनानि विहायेमे समरे समायाताः, किञ्च प्राणानपि त्यक्ष्यन्तीति व्यंजनालभ्यार्थः। मृतकतुल्या इम इत्यर्थोऽपि बोधयितुं शक्यते।

लक्षणामूलाशाब्दीव्यंजनायास्तृतीयमुदाहरणम्

क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते।

क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोतिष्ठ परन्तप।।

अत्र पार्थपरन्तपसम्बोधनपदद्वयसम्बोधव्येऽर्जुनेक्लीबतागम इति मुख्यार्थस्य बाधः सुस्पष्टमेव परान्तापयतीति योद्धा तस्मिन् कथं नापुंसक्यापत्तिः। अग्रे चोक्तमपि 'नैतत्त्वयीति' वीरत्वं प्रदर्शय, युद्धं कुरु लक्ष्यार्थः, युद्धभूमौ क्लैब्यं न युक्तं, प्रहरणेवोचितमित्यनेनानयोर्विवेचकत्वसम्बन्धः। क्लैब्यं मा स्म गम इतिपदं वीरत्वं दर्शय इतिबोधनाय स्वार्थमर्पयति तस्माल्लक्षणलक्षणा। अगूढव्यङ्ग्या सहृदयजनसंवेद्याभाति न सर्वजनग्राह्येति। क्लैब्यपदप्रयोगो युद्धायार्जुनं झटित्येव प्रेरयति विद्युत्स्पर्शाघातवदिति ध्वनितार्थोऽपि श्लाघ्यः।

लक्षणामूलाशाब्दीव्यंजनायाश्चतुर्थमुदाहरणम्

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा।

निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः।।

आशा बलवती राजन्! शल्यो जेष्यति पाण्डवानिति महाभारतीयवचनात्, किञ्च सर्वस्यापि आशावतो जनस्यैव युयुत्सालक्षिता न निराशस्य जनस्येति। अत्र निराशीनिर्ममस्सन् युध्यस्वेति मुख्यार्थस्य बाधो जातः, यद्वा जयेम यदि वा नो जयेयुरिति कथं भीष्ममहं सङ्ख्ये चात्र नैराश्यममत्वदृष्टिः, इमामपहाय जेतासि रणे सपत्नानिति लक्ष्यार्थः, उभयोः कार्यकारणसम्बन्धः, लक्षणलक्षणात्र संघटते निराशीरित्यस्य आशावान् भूत्वेत्यर्थान्तरग्रहणात्। व्यङ्ग्यश्च कथं त्वं तान्प्रति आत्मीयतां हृदि पालयसि! ये दुर्योधनकृतसमग्रकुकृत्यजातं दृष्ट्वापि तस्यैव बले प्रधानयोद्धृरूपेण वर्तन्ते। इमान् प्रति ममत्वत्यागं कुरु, निर्ममो भवेति। गूढव्यङ्ग्या लक्षणलक्षणेयं शाब्दीव्यंजनायाः विद्वन्मनोहारिणीति मन्तव्या।

लक्षणामूलाशाब्दीव्यंजनायाः पंचममुदाहरणम्

अपि चेत्सुदुराचारो भजते मामनन्यभाक्।

साधुरेव स मन्तव्यः सम्यग्व्यसितो हि सः।।

सुदुराचारः साधुरेव मन्तव्यः इति मुख्यार्थः, यस्य बाधः श्रुतिमात्रेण समुत्पन्नः। अत्र विध्यर्थस्तव्यत्प्रयोगः, किमीश्वरं भजमानो दुराचारं कुर्वन् जनः साधुर्मन्तुं शक्यते। अनेन तु धर्मविप्लवो जायताम्, लक्ष्यार्थः मां हृदि पश्यन् कर्मपालनं सदाचारी कुरुते। अतः सुदुराचारपदं सदाचारलक्ष्यार्थग्रहणाय स्वार्थं त्यजति। विवेच्यविवेचकसम्बन्धः कश्चित्कल्प्यताम्, सुदुराचारो नेश्वरं भजते सदाचारवान्भजत इति,

लक्षणामूलाशाब्दीव्यंजनायाः षष्ठमुदाहरणम्

द्रोणं च भीष्मं च जयद्रथं च
कर्णं तथान्यपि योधवीरान्।
मया हतांस्त्वं जहि मा व्यथिष्ठा
युध्यस्व जेतासि रणे सपतनान्।।

'हतान् जहि' मुख्यार्थो यस्य बाधः श्रुतिमात्रेण ग्राह्यः,मृतमारणं न दृष्टं प्रयासवैयर्थ्यात्,लक्ष्यार्थः दुर्योधनपक्षगतत्वादिमेऽर्धमार्गिणोऽधर्मिणां मृत्युरवश्यंभाविनी तस्मात् मृता एव, मुख्यार्थलक्ष्यार्थयोस्सामीप्यसम्बन्धः, आततायिनामेतेषां दुर्योधनादीनां मृत्युः सन्निकट एवेति। व्यङ्ग्यार्थश्च मा भैषीः, मैव च ममत्वमुपागच्छेः, मारय भीष्मादीन्योधवीराननिति। अगूढव्यङ्ग्यालक्षणलक्षणेयं प्रयोजनात्प्रयुक्ता व्यङ्ग्यस्य सर्वजनग्राह्यत्वात्। शत्रुपक्षस्वीकृतत्वादिमे द्रोणभीष्मादयस्ते दुर्योधनवत्सपत्नत्वेन योद्धव्या ; न पूजार्हा इति ध्वनितार्थः।

बोधव्यवैशिष्टयवशादार्थीव्यंजना

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्।
असक्तं सर्वभृच्चैव निगुर्णं गुणभोक्तृ च।।

परमेश्वरस्य सर्वव्यपाकतां वर्णयन् श्रीभगवानुवाच—ईश्वरः सर्वेन्द्रियरहितस्सन् सर्वेन्द्रियलभ्यार्थं गृह्णाति, अनासक्तो भवन् सकलजनपालनं कुरुते, निर्गुणस्सन् सत्त्वरजस्तमोगुणान् तच्छायापत्त्या भुङ्क्ते च। वक्तृवैशिष्टशादेवायं व्यङ्ग्यार्थ आस्वाद्यते कदाचिद्विस्मयरससंवलितः। लोके इन्द्रियसहितत्वे सति तदर्थग्रहणत्वमिति सामन्यो नियमः, सक्तस्यैव पालनकर्मनिरतत्वम् अन्यथा सर्वे सर्वान् पालयेयुरिति तल्लोके न क्वचिदपि केनचिदपि विशाललोचनसम्पन्नेन जनेन द्रष्टुं शक्यते। निगुर्णत्वे सति गुणग्रहकत्वमपि न दृष्टम्, सङ्गीतास्वादशून्यस्य गीतश्रवणाश्रुतेः, इदं सर्वमपि विस्मयरसवाहि।

अधुनार्थीव्यत्र्जना विमृश्यते।

काकुवैशिष्टशादार्थीव्यत्र्जना

अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः।
नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः।।

साभिप्रायविशेषणपदप्रयोगादत्र परिकरालङ्कारप्रतीतिः, किञ्च 'मदर्थे' इतिपदं काक्वा व्यङ्ग्यार्थमभिव्यनक्ति। न तु ते शूरवीराः स्वार्थाय अपितु मम दुर्योधनस्य कृते प्राणानपि त्यक्तुमुद्यतास्सन्ति। भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते। अत्र भिन्नकण्ठध्वनिरवश्यं ग्राह्यः। लोके हस्तादिसंचालनपूर्वकं मदर्थपदप्रयोगः साक्षाद् द्रष्टव्यः।

वक्तृवैशिष्ट्यवशादार्थीव्यञ्जना

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम्।

पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम्।।

दुर्योधनोक्तिरियम् अपर्याप्तमितिपदमपरिमितमर्थं व्यंजयति यत् अस्मत्सैन्यं कुरुश्रेष्ठस्य परशुरामशिष्यस्य महाव्रतिनो महाशूरवीरस्याधिगतानुभवस्य भीष्मस्य संचालने वर्तते, पाण्डवानां सैन्यं पर्याप्तमितिपदं न्यूनार्थं प्रकटयति यत् नववयसः अनवाप्तानुभवस्य साधारणयोद्धृभीमस्य सेनापतित्वे न तु श्रीकृष्णप्रभृतिपरमवीरस्य संचालने। इदं समग्रमपि व्यङ्ग्यार्थजातं वक्तृवैशिष्ट्येन बोध्यते।

प्रस्ताववैशिष्ट्यवशादार्थीव्यंजना

कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन।

इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन।।

अत्रार्जुनोक्तं तदनुरूपम्, कुलश्रेष्ठो भीष्मो गुरुवरो द्रोणाचार्यश्च नित्यं पूजनीयौ, आभ्यां साकं युद्धं नोचितम्, तत्रापि इषुभिर्न त्वन्यसाधनैरिति, अथ चाहं युद्धंकरिष्ये, सङ्ख्ये प्रतियोत्स्यामि उत्तमपुरुषैकवचनस्य क्रियापदं व्यनक्ति यदन्ये युद्धंकुर्युर्न मे काचिद्धानिः परन्त्वहमेव तेषां प्रियतमशिशष्य एवंविधनिन्दितकर्मकृते नियुक्तःइतिव्यङ्ग्यार्थाः प्रस्ताववैशिष्ट्येन ज्ञायन्ते। मधुसूदनारिसूदनसम्बोधनद्वयमपि सार्थकं व्यङ्ग्यार्थगर्भितं, कथमित्युक्ते मधोः सूदनो नाशयिता वा अर्थात् दानवा हन्यन्ते न तु कुलज्येष्ठा गुरुवश्च। अरीणां सूदनो नाशको वा अर्थात् इषुभिश्शत्रवो मार्यन्ते न पूजनीयाः इति ध्वनिरपि सहृदयानन्दकरः प्रतिभाति।

कालवैशिष्ट्यवशादार्थीव्यंजना

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः।

निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम्।।

'प्रवृते शस्त्रसम्पाते' अस्मिन् युद्धकाले त्वमोहमुपागतो युद्धाद्विरतो भवसि चेत् सर्वत्र निन्दा तेऽहितचिन्तका विधास्यन्तीति, गालिं दास्यन्ति, पीडाकरानपशब्दान् प्रयोक्ष्यन्ति, यद्धि त्वत्कृतेऽसह्यं भविष्यति। मा त्वमस्मिन् काले मोहमुपागच्छेरिति व्यङ्ग्यार्थः कालवैशिष्ट्यवशाद् बोध्यते। उदाहरणमिदं देशवैशिष्ट्यादपि मन्तुं शक्यते। अस्मात् युद्धस्थानान्मा विरतो भवेति व्यङ्ग्यार्थप्रतीतेः।

वाच्यवैशिष्ट्यशादार्थीव्यंजना

अहो बत महत्पापं कर्तुं व्यवसिता वयम्।

यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः।।

राज्यं च सुखं च तयोर्लोभस्तेन, राज्यस्य सुखं राज्यसुखं तस्य लोभस्तेन, राजसुखमेव लोभस्तेन वा, राज्यं च सुखं च लोभश्च राज्यसुखलोभास्तेषां समाहारः राज्यसुखलोभं तेन वा , अन्तिमोऽयं समाहारद्वन्द्व एव मन्तव्यः सर्वेषामपि पदानां पृथगर्थाभिधायकत्वात् साक्षादवलोक्यताम्—न राज्यमात्रं सुखस्य कारणम्, नैव सुखं केवलं राज्याधीनं न च राज्यसुखस्यैव लोभः राज्ञोऽपि परमपुरुषार्थप्राप्त्यर्थ प्रसर्पणदर्शनादिति। किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वेत्यर्जुनकथनोप—लब्धेरिति। एतादृशराज्यसुखलोभेन स्वजनान् ये घ्नन्ति, ते पापभाजो भवन्ति, तस्मान्न केवलमहमेवापितु सर्वे पाण्डवा न धार्तराष्ट्रान् स्वबान्धवान् मारयिष्याम इति व्यङ्ग्यार्थो वाच्यवैशिष्ट्यवशादेव बोध्यते।

अनेन प्रकारेण श्रीमद्भगवद्गीतायां व्यंजनाविमर्शो यथामति मया निर्मत्सरविज्ञानां समालोचनाय दर्शितः। अन्यान्यप्युदाहरणानि दृष्टानि; परन्तु न तानि विस्तरभयादिहोक्तानीति। नात्र चाभिधामूलाव्यंजनायाश्चर्चापि कृता लक्षणाव्यंजनाशब्दशक्तिद्वयानुरोधवशादिति। अत्रोदाहरणोपस्थापने कश्चित्क्रमोऽतिक्रान्तो न तत्र प्रमादो मन्तव्यः बुभुक्षितस्य यथोपलब्धभोज्यपदार्थग्रहणदर्शनवत्, सम्पन्नायां रसवत्यां प्रदत्तेष्वपि षट्पंचाशद्भोज्यवस्तुषु स्वरुच्यनुरोधेन कस्यचिन्मिष्टान्नग्रहणं कस्यचित्तु मिष्टान्नोपेक्षणमालक्षितम्।

सुहृद्! आनन्दनिमग्नोऽहमधुना तव वाग्वैभवेन। सम्प्रति संजातानन्दो गीतायां समुपलब्धोपमालंककारस्य दार्शनिकं परिशीलनं यदि कृतं।तदिह श्रावय। बहुधा कृतं सखे! श्रोतव्यं भवता सावधानमनसा।जीवनस्य वैविध्यं विचित्रं, तदत्रार्जुनस्य कदाचिद्रतिसमयुवतिजनद्रौपदी—सम्प्राप्तेः शृङ्गारमयं,कदाचिद् युधिष्ठिरस्य

यौवराज्यकाले सर्वसुखलाभात्, भगवतः श्रीकृष्णसङ्गमुपलभ्य आहारविहारावसरे 'यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासन–

भोजनेष्वितिगीतावचनप्रामाण्यात् हास्येन परिप्लुतं हासमयमभीप्सितोप–लब्धेः, कारुण्योपेतं वनवासकालेऽगणितकष्टसहनात् स्वस्य स्वभ्रातृवर्गस्य च निन्दितकर्मसम्पादननिरतत्वाद्विराड्गृहे कदाचिदनवरतकौरवजनकृतकुकृत्यद्यूत क्रीडालाक्षागृहद्रौपदीचीरहरणजनितक्रोधेन सन्दह्यमानं स्वाभिलाषविघातकोपस्थितेः, कदाचिदुत्साहसम्पन्नवीररसग्राहि निजारिनाशसंलग्नत्वाद् देवदत्तनामकशङ्खवादनाच्च, कदाचिन्महाभारताख्युद्धे सम्भाव्यस्वकुलविनाशानन्तरं वर्णसङ्करपितृ पिण्डलुप्तत्वभयमाकलयय्य भयानकरससंवलितं, कदाचिद् भाविस्वजनास्थिमज्जा रुधिरमांसादिदर्शनाद्, भुञ्जीय भोगान्रुधिरप्रदिग्धानितिवचनाद् बीभत्सरसवाहि, कदाचिदीश्वरनिर्मितजगति अविश्वसनीयदृश्यादिजातं येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च। त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।। इदं विलोक्यं विस्मयरसवाहि, अतएव परिणामतापसंस्कारगुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिन इतिस्मरणात् वैराग्यसोपानमारूढं,'भैक्ष्यमपीह लोके' इतिवचनेन तस्मिन् निर्वेदोपपत्तेश्च। अतोऽत्र सर्वरसमयजीवनसमुपेतार्जुनं कर्मयोगाभिप्रवृत्तये भगवान् श्रीकृष्णः श्रीमद्भगवद्गीताज्ञानमुपदिदेश। उपदेशमपि काव्यमयं प्रददता तेन काव्यस्य काव्यमयत्वं संरक्षता सर्वाधिकोपमोदाहरणानि श्रावितानि ,उदाहरणानि बहूनि ;न तानि समग्राणि अपितु कानिचिदेव तेषु स्वबुद्धशा महत्त्वपूर्णानि दर्शनरीत्या परिशील्यमानानि सन्ति। सादृशमुपमा भेदे इति माम्मटं वचनमनुसृत्य निबन्धोऽयं विलिख्यते। निर्वेदमान्नमर्जुनं जीवनस्यानित्यत्वं वर्णयता किं चास्यात्यन्तमेव हेयत्वमुपकल्पयता, आत्मनश्च नित्यता साधिता। यथा जीवने कश्चिज्जनो मुनिर्वा रूपाभिवृद्धये शीतातपलोकलज्जा निवारणार्थं च जीर्णानि प्राचीनानि वस्त्राणि कौपीनानि वा परिवर्त्य अवश्यमेव नूतनानि परिधत्ते। तद्वदेव आत्मा जीर्णानि शरीराणि त्यक्त्वा नवीनानि आदत्ते। आत्मनः शरीरेन्द्रियमनोबुद्ध्यङ्कारसंयोगो जन्म, तस्माद् वियुक्तिर्मरणमिति। उपमोदाहरण–मेतदत्यन्तमेव लौकिकं वस्त्राणां सर्वजनग्रह्यत्वात्। देहोऽस्येति देहीतिपदप्रयोगात् देहो भिन्नो देही च भिन्न इतिनिर्दिष्टम्। अनेन देहात्मवतां चार्वाकानां मतमप्यपास्तं तिष्ठति। यथा–

वासांसि जीर्णानि यथा विहाय

नवानि गृह्णाति नरोऽपराणि।

तथा शरीराणि विहाय जीर्णा–

न्यन्यानि संयाति नवानि देही।।

वासांसि उपमानम्, देह उपमा, जीर्णता साधारणधर्मः। यथा वाचकशब्दः। इत्येवंप्रकारेणात्र पूर्णोपमा। देहवाचकशरीरशब्दस्य शरीराणीत्युक्त्वा पुनर्जन्म अर्थात् वारं वारं शरीरधारणमप्युक्तम्।

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः।

इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता।।

समुपदिशति श्रीकृष्णोभगवान् यदा इन्द्रियाणि स्वविषयनिवृत्तानि क्रियन्ते साधकेन तदैव तस्य प्रज्ञा सम्यक् प्रतिष्ठते। इत्थं विज्ञापयितुं कच्छपमुदाहरति। यथा कच्छपो विहारकाले स्वान्यङ्गानि निस्सारयन् विषयान् प्राप्नुवंश्च परिभ्रमति, किन्तु प्राणघातमनुमन्य झटित्येव तानि सर्वाण्येवाङ्गानीन्द्रियाणि वा तद्विषयादाहृत्याभ्यान्तरीकरोति। तथैव साधकोऽपि विषयपराणीन्द्रियाणि प्रज्ञाप्रतिष्ठायै तद्विषयेभ्यः आहरेदिति। अत्र स्थिरबुद्धिजनस्येन्द्रियाणि उपमानपदवाच्यानि, कच्छपस्याङ्गानिउपमेयमानि, विषयाहृतिरिन्द्रियाणां साधारणधर्मः, इववाचकशब्द इत्यनेन पूर्णोपमालङ्कारः।

आपूर्यमाणमचलप्रतिष्ठं

समुद्रमापः प्रविशन्ति यद्वत्।

तद्वत्कामा यं प्रविशन्ति सर्वे

स शान्तिमाप्नोति न कामकामी।।

यथा विभिन्ननदीनां जलानि परिपूर्णं स्थिरप्रतिष्ठासम्पन्नं समुद्रं समाविशन्ति न तं विक्षोभयितुं प्रभवन्ति, तथैव यस्मिन् स्थितप्रज्ञे सर्वे तस्याभिलाषाः तमप्रभावयन् विलयीभवन्ति ,स एव शान्तिं प्राप्नोति न तु कामनासम्पन्नो जनः। स्थिरप्रज्ञोनाम जितेन्द्रियः, यस्य वशे इन्द्रियाणि नासाविन्द्रियवश इत्यर्थे सन्तुष्टो जनः। किञ्च भगवतोपदिष्टं यत् स्थितप्रज्ञो न विषयैराकृष्यते , तस्मिन् सर्वकामलयादिति। अत्र समुद्र उपमानं, स्थितप्रज्ञः उपमेयः, प्रविष्टिस्साधारणधर्मः, पूर्णोपमा उपमायाः सर्वाङ्गोपलब्धेरिति।

धूमेनाव्रियते वह्निर्यथादर्शो मलेन च।

यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम्।।

महाशनकामस्य प्रभावं वर्णयता कथ्यते श्रीमता यत् यथा धूमो वह्निमावृणोति, निर्मल: प्रतिबिम्बदर्शक आदर्शो धूलिकणैराच्छादितो जायते, गर्भश्चोल्बाख्येन केनचित् पदार्थेनावृत्तस्तिष्ठति तथैव सर्वतत्त्वप्रकाशकज्ञानं कामेनाच्छादितं मन्यते, यद्वशात् न किञ्चिदपि तदुपहितचित्त: पश्यति। अयं काम: यो ह्यसौ धर्मविरुद्धोऽन्यथाकारक: ज्ञानोपलब्धये हेयो मन्तव्य:। अत्र मालोपमालङ्कारकामुदर्शयति। किं वाग्निप्राप्त्ये धूमो दूरीकरणीयो भवति,रूपसाक्षात्काराय दर्पणास्थमालिन्यमपाक्रियते, गर्भप्रतिपत्तये उल्बमपसार्यते तथैव ज्ञानसम्प्राप्तये कामोऽप्यपसारणीयो भवति। धूम:,मलम् ,उल्बम् उपमानानि, काम उपमेय:, आवरकत्वं साधारणधर्म:,यथा वाचकशब्द:। तस्मात्पूर्णोपमा।

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति य:।

लिप्यते न स पापेन पद्मपत्रमिवाम्भसा।।

आसक्तिं विहाय ब्रह्मसमर्पणपुरसरं यो जन: कर्माणि कुरुते, असौ पापेन तेनैव प्रकारेण सम्बद्धो न भवति येन जलाशयस्थं सदपि कमलपत्रं जलेनावलिप्तं न दृश्यते। विचार्यते किं ब्रह्मणि कर्मार्पणपूर्वकं कृतेऽपि पापकर्मणि अनासक्तो जन: पापमुक्त:, अहो! विचित्रमिदं भगवद्वाक्यम्,मैवम् अयि मानवा:! अत्र वार्ताद्वयी ध्यातव्या, प्रथमा ब्रह्मार्पणं कर्मणां, द्वितीया आसक्तित्याग: कर्मसु। अर्पणं कदा क्रियते ज्ञाते स्वरूपे। तत: किं कश्चिदपि पापानि समाचरति? ब्रह्मावगत्यनन्तरं कर्मषु स्वयमेवानासक्तिरिति प्रसिद्धमेव। किम्भो: एतद्वयसिद्धेऽपि कश्चित्पापं करिष्यति! एवं विधो जन: शास्त्रविहितकर्माणि कुर्वन् कथं न कमलपत्रमिव मुक्तस्स्यादिति भाव:, अन्यथा त्वीश्वरस्य पापकर्म्मनोदनत्वापत्ति:। पद्मपत्रमुपमानम्,य: अनासक्तपुरुष उपमेय:, अलिप्तत्वं साधारणधर्म्म: इववाचकशब्दस्तस्मात्पूर्णोपमा।

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।

योगिनो यतचित्तस्य युंजतो योगमात्मन:।।

वायुरहिते स्थले यथा दीपको नैव प्रेजते तथैवपरमात्मध्यानावस्थितयोगिजनस्य चित्तं भवतीति बोधव्यार्थ:। अत्र चित्तस्योपमा दीपेन दत्ता, अवधेयं—वायुवेगानाहतो न तु वायशून्य इत्यर्थो वायोरपि सर्वत्रोपस्थिते:। दीप: प्रकाशकोघाननिवारकश्च, चित्तमपि रजस्तमोऽभिभूतं सत्त्वाख्यं प्रकाशकमिष्टम्। साधुत्वमस्या उपमाया। दीप उपमानम्, चित्तमुपमेय:, नेङ्गनं नाम प्रेजनं चांचल्याभाव: साधारणधर्मो यथा वाचकशब्दश्चातोऽत्रपूर्णोपमा।

चंचलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्।।

मनस औपम्यं वायुना साकं कृतमत्यन्तमेवोभयोरपि उपमानोपमेययोस्सार्थक्य मनयोः

उभयोरप्यमूर्त्तत्वात्। मन एव मनुष्याणां कारणं जन्ममोक्षयोरित्यनेन तत्सर्वसाधकत्व–

मुपदर्शितम्। किं चास्मद्गुरुगीतं–भूतले केवलं नाम एकं मनो मानवानां महावैरि दुर्निग्रहं, येन वीरेण एतन्मनो निर्जितं, वैरिणस्तेन अन्ये जिता वा न वेतिस्मरणाच्च सङ्कल्पविकल्पात्मकमनोनिग्रहोऽवाश्यको बाह्यविषयगमनात्। दुष्करमित्युक्त्वा मनो वशीभवितुमर्हति न तु सर्वथा तन्निग्रहमसम्भवमिति अभ्यासेन तुकौन्तेय वैराग्येण च गृह्यते प्रमथनशीलबलवद्दृढमपि सदित्युक्तेः। वायुरुपमानम्,मन उपमेयम्, निग्रहदौष्कर्य्यं साधारणधर्म्मः इववाचकशब्दश्चेति पूर्णोपमा।

मत्तः परतरं नान्तिकिञ्चिदस्ति धनञ्जय।

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव।।

व्याप्यव्यापकभावज्ञापनात्सृष्टीश्वरयोरीशावास्यमिदं सर्वं यत्किं च जगत्यंजदितिमन्त्रमननाच्चेति।

सकलसंसृतिव्यापनादीश्वरव्यापकोऽव्यापकश्च संसारस्तद्वशपनभूतत्वादिति स्मारयति प्रभुः। अत्रापि श्लाघनीयोपमा ययाभिव्यज्यते यदयं संसार एकेनैव परमतत्त्वेन ग्रथितोऽस्ति। यथैकस्मिन् सूत्रे मणयः, सूत्रात् पृथङ्नो मणिगणत्वसौन्दर्यम्। मणिगणत्वमित्युक्त्वा संसारस्योपादेयता दर्शिता सामान्यजनस्यापि बहुमूल्य मणिप्राप्त्युपायचिन्तनत्वादिति। एतेन कर्म्मयोगोऽपि साधितो भवति संसारस्य कर्म्मभूमित्वात्। अनयोपमया जीवेश्वरयोस्संयोगसम्बन्धो दर्श्यते न तु समवायः सूत्रमणिसम्बन्धदर्शनादिति। एतेन वेदान्तिनां जीवो ब्रह्मैव नापर इत्यपि प्रभावितोऽवलोक्यते जीवेश्वरयोरभेदस्य समवायत्। मणिगण उपमानम्, इदम्पदवाच्यसंसार उपमेयः, प्रोतता संनिहितता साधारणधर्म इववाचकशब्दः।

यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते।

सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।।२१

अत्रात्मनो देहगुणैः पार्थक्यं दर्शयन् तस्य सर्वव्यापकेनाकाशेन साकमुपमां साधयति। साधारणजनस्य जिज्ञासामवतारयति यत् यद्यात्मा सर्वव्यापकः कथन्न व्याप्यशरीरगुणसम्बद्धो व्याप्यस्यैकदेशवर्तिनः स्वयमेव समस्तदेशवर्तिनि व्यापके निष्ठत्वात्। समाधानं कुर्वन् ब्रूते—आत्मा आकाशसमं सर्वव्यापी सन्नपि देहे नैव लिप्तो जायते। आकाशात्मनोरमूर्त्तत्वादियमुपमा शंसनीयास्ति। आकाशमुपमानम्,आत्मा उपमेयः, लिप्तत्वाभावः साधारणधर्मः यथा वाचकशब्दस्तस्मात्पूर्णोपमा।

यत्तदग्रे विषमिव परिणामऽमृतोपमम्।

तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्।।

ईश्वरस्मरणपूर्वकं भजनध्यानसेवाभ्यासेन च साधको यदा प्रवर्तमानोभवतितदा दुःखान्तमवाप्नोति। सात्त्विकमेतत्सुखमारम्भकाले दुःखाधिक्याद्विषसममुपकल्प्यते, परन्तु परिणामकाले परमात्मविषयकबुद्धिप्रसादोत्पन्नत्वादमृततुल्यमास्वाद्यते तेन। अत्र सन्दिष्टं यदीश्वरानुकूल्याय समारब्धकर्मसु यद्यपि दुःखं प्राप्यते तथापि ततः परं सुखलब्धिरवश्यं जायते। नात ईश्वराभिमुखीकरणक्रियाकालिकजन्यविषतुल्यदुःखतो भेत्तव्यं तदन्तऽमृतसमसात्त्विकसुखोपलब्धेरिति। विषममृतं चोपमाने, सात्त्विकसुखमुपमेयम्, दुःखसुखानुभवस्साधारणधर्मो यश्च लुप्तः, इव उपमा च वाचकशब्दः। अतो लुप्तोपमा मन्तव्येति विमर्शः।

विषयेन्द्रियसंयोगाद्यत्तग्रेऽमृतोपमम्।

परिणामे विषमिव तत्सुखं राजसं स्मृतम्।।

ऐन्द्रियं सुखं यद्धि विषयेन्द्रिसंयोगवशाज्जायमानं सङ्गकाले यद्यपि अमृततुल्यं तथापि परिमाणतः विषसममेव तस्य राजसत्वाद् बोध्यमिति। एकस्यैव दुःखस्यामृतविषौपम्याद्वैचित्र्यं कल्प्यते। अमृतं विषं चोपमानद्वयं,राजससुखमुपमेयम् उपमा इव च वाचकशब्दौ सुखदुःखानुभवस्साधारणधर्म्मो यो ह्यत्र लुप्तस्तस्माल्लुप्तोपमा स्वीकार्या।

अये प्रष्टव्यं विस्मरन्नस्मि। किं भवता निजगुरुवरविषये कश्चन ग्रन्थो रचितः, किमपि काव्यं वेति? कथन्न रचितं वासुदेवचरितमहाकाव्यम्। यदि श्रोतुमभिलषसि चेत् शृणु।

सार्वभौमसंस्कृतप्रचारसंस्थानस्य संस्थापकस्वर्गीयवासुदेवद्विवेदिगुरुवराणां संस्कृतावदानमाधृत्य विरचितमेतत्काव्यं द्वादशसर्गेषु वर्तते।

प्रथमसर्गोऽयं देवसंसद्वर्णननाम्ना चतुश्चत्वांरिशत्पद्यैः स्रग्विणीछन्दसि रचितो वर्तते। प्रतिकल्पवद् वर्तमानकल्पेऽपि सृष्टौ किञ्जातं किञ्जायत इतिविषयिणी देवसभायोज्यते। अत्र चिन्तनीयविषयेषु संस्कृतमेव प्रथमतया गृह्यते। यथा–

एकदा देवलोकेऽधिवेशोऽद्भुतः संसदोऽभून्महान् काल्पिको दैविकः।

बिन्दवो यत्र भिन्ना विमृष्टा नवाः संस्कृतं तत्र चिन्त्यं मतं सर्वतः।।

यत्र सा सभायोजिता स देवप्रासाद कीदृश इति वर्णितमस्ति। प्रासादभित्तिषु वेदोपनिषद्गीतारामायणमहाभारतादिशास्त्रमुट्टङ्कितमस्ति। तत्रैव विविधदृश्यसंवलिता मनोज्ञा चित्रावलिरपिवर्तते। चित्रेषु रामायणकालिकमेकं सीतारामवियोगरूपं चित्रं दृश्यते। तद् दृष्ट्वा लक्ष्मीः कम्पते पृच्छति च विष्णुं यत् संस्कृतरक्षार्थं भवान् यदि देवैर्धरायां प्रेष्यते तदाहं किं करिष्ये। विष्णुरुत्तरयति यदहमवश्यं गमिष्यामि विप्रगोधर्मरक्षार्थं कृतं प्रणं स्मरन्। अस्मिन् काले सभारम्भधण्टिकारवश्श्रूयते।

द्वितीयसर्गः संस्कृतह्रासनाम्ना त्रिषष्टिपद्यैः स्रग्विणीच्छन्दसाबद्धो वर्तते। अन्वर्थसञ्ज्ञकेऽस्मिन् सर्गे वृहस्पति–ब्रह्म–शिवेन्द्र–विष्णु–वाय्वग्नि–नारदाश्विनिकुमारद्वय–सरस्वती–लक्ष्मी–पार्वती–गङ्गादिदेवता विराजमाना विलोक्यन्ते। अत्र लोके कीदृशं संस्कृतमुपेक्ष्यमाणमस्तीति विमृष्टं वर्तते। किञ्च संस्कृतरक्षणार्थं विष्णुरेव पृथिव्यां गच्छेदिति देवनिर्णयः श्रूयते। विष्णुश्चाङ्गीकरोति। यथा–

एक एवात्र देवो मया तर्क्यते संस्कृतं संस्कृतिं यो हि रक्षिष्यति।

येन लोकोपकारैः कृतैः सर्वदा रक्षितं भारतं रम्यकं स्वःसमम्।४७।

सैष विष्णुर्महान्सम्मतो मद्धृदा संस्कृतं रक्षितुं प्रार्थ्यतां सादरम्।

येन दिव्या धरा रक्षिता नैकधा संस्कृतं तेन कौ श्रद्धया रक्ष्यताम्।४८

उत्थितो हृष्टचित्तः श्रियो वल्लभः संस्कृतोद्धारकर्माखिलो माधवः।

स्वीकृतं देवराज्ञः सदुक्तं मया भर्तुराज्ञा कदा किङ्करैर्हीयते।।४९। अत्रैव द्विवेदिकुले जन्म ग्राह्यमित्यपि सूच्यते।

तृतीयोऽयं भारतवर्षवर्णनाख्यः सर्गः षट्पञ्चाशता पद्यैर्द्रुतविलम्बितच्छन्दसि वर्णितो

वर्तते। अत्र भगवान् विष्णुः पृथिवीलोके गमनवृत्तश्रवणव्याकुलां लक्ष्मीं मानयमानो भारतवर्षवर्णनं कुरुते। यथा–

सुखवहः कमलापतिमाधवः कमलकान्तिमुखश्शुशुभे हरिः।

विविधभारतदृश्यवशंमनाः स्मृतिविलोलतरङ्गमहार्णवः।१।

पतिधरागमनासुखविह्वलां धृतकराम्बुजरम्यकपोलकाम्।

नयनवारिविमृज्जितकज्जलां विरहदुःखशताहतवल्लभाम्।२।

चिकुरबन्धविमुक्तघनावलीं ललितविद्युद्दामविभावतीम्।

कटुकटाक्षविलोकनकौशलां स्मितमुखः कमलां स हि दृष्टवान्।३

त्रेतायुगीनद्वापरयुगीनवृत्तानि श्रावयन् श्रीविष्णुः स्वजायां मानयितुं साफल्यं लभते लक्ष्मीं ज्ञापयति च यन्मम नाम वासुदेवस्तव च रुक्मिणीति भविष्यतः। मम माता प्रसवदुःखव्याकुलास्ति तस्मादहं शीघ्रं गच्छामीति।

चतुर्थसर्गो जन्मोत्सववर्णननामकश्शार्दूलविक्रीडितच्छन्दसि त्रिषष्टिपद्यपरिमितो वर्तते। यत्र गुरुवरजन्मस्थानदेवप्रिया देवरिया तत्सम्बद्धसिवानच्छ परागोपालगञ्जनालन्दादिस्थलानां नाम गृहीतमस्ति विहारसीमनिकटत्वात्। किञ्च भवानीछापरनाम्नेतिवृत्तमपि कल्पितं वर्तते।

अत्र श्रीविष्णोर्जन्म द्विवेदिकुले शुभलग्नतिथिषु जायते। यथा—

देव्येषा पवधारिनामजननी या देवकीतल्लजा

सप्तत्युत्तर ऊनविंशतितमे संवत्सरे वैक्रमे।

नक्षत्रेऽद्भुतपुष्यके धनुषि सा शुक्ले रवौ फाल्गुने

रात्रौ पुत्रमजीजनच्छुभतिथौ चैकादशीपर्वणि।१४।शिवसरस्वतीनारदा जन्मोत्सवे छद्मवेषधारिणो दर्शनार्थमायान्ति। यद्यपि गुरोः पित्रा देवलक्ष्मदर्शनादिमे परिज्ञायन्ते तथापि नासौ रूपगोपनतां भिनत्ति। जन्मकुण्डलीस्थग्रहगुणदोषपरिज्ञानाय ज्योतिषी समायाति बोधयति चायं जातकोऽसाधारणः संस्कृतरक्षार्थं भगवतो विष्णोरपरोऽवतारो मान्यः। अध्ययनपाणिग्रहादिवर्णनमपि सर्गेऽस्मिन् कृतमस्ति। अत्रैव वासुदेवस्य काश्यामध्ययनसमीहा जागर्ति;स्वसुताय श्लाघनीयः पित्रुपदेशो देशरक्षाविषये संस्कृतरक्षण ।विषये च दत्तो वर्तते। पितुराज्ञामवाप्य काशीं प्रत्यागमनञ्चात्र वर्णितमस्ति।

पञ्चमसर्गो वंशस्थवृत्ताबद्धो देशप्रेमवर्णनाभिधानो वर्तते। यत्र काशीमागत्य काशिकजनताभिनन्दितस्सन् देशोऽयं पराधीन इति विचिन्त्य पूर्वं देशस्य स्वतन्त्रतैव

प्राप्या ततः संस्कृतरक्षेति मत्वा स्वातन्त्र्यमभिलषन् तदनुकूलं कार्यं करोति। स्वप्ने देवा आयान्ति बोधयन्ति चैनं यद् भवतोऽवतारः संस्कृतप्रचारार्थं मतो न तु देशरक्षार्थमिति। इदानीं भवानाङ्ग्लैस्सह युध्यते कथम्? अत्र गुरुर्देशप्रेमवर्णनं करोति साधयति च यत्स्वतन्त्रदेशे एव संस्कृतरक्षा भवितुमर्हति न परतन्त्रे। इदं श्रूत्वा देवाः पराजिता एनमभिनन्दन्ति प्रशंसन्ति च। स्वप्नादुत्थितो वासुदेवः स्वतन्त्रतागानं शृणोति देशो मदीयः स्वतन्त्रो जात इति। अस्मिन्नेव दिवसे सार्वभौमसंस्कृतकार्यालयं संस्थापयति। यथा–

शुभे दिनेऽस्मिंस्त्वरितं बुधावृतश्शिवस्य पूर्यामकरोत्सुधीश्वरः।
स्वदेशजातेर्जनताभिवृद्धये स सार्वभौमाभिधसंस्कृतालयम्।।५१

ततश्च संस्कृतपाठशाला द्रष्टुं कामयते।

षष्ठसर्गः संस्कृतदशावर्णननाम्ना पञ्चाशतोपेन्द्रवज्रापद्यै रचितो वर्तते। अत्र संस्कृतच्छात्रगुरूणां स्थितिमवलोक्य विषीदति गुरुवासुदेवः। यथा–

दिनेऽग्रिमे संस्कृतलब्धकीर्तिस्स वासुदेवः सुरगीःप्रचारी।
दिदृक्षया संस्कृतपाठशाला गतो मुदा शिष्यविशिष्टवृत्तः।।३
बुधास्यताम्बूलतमालथुत्कैर्विलिप्तभित्तिर्व्यथिता ब्रुवाणा।
सभाजयामास विलोकयन्ती स्वरक्षकं मान्यवरं विभाव्य।।४
सुधीस्स विद्यामठमन्दिराणि विलोकितुं तत्र च देववाणीम्।
अनारतं नो गतवान् द्विवेदी क्व संस्कृतं जीवति रोदितीव।।५

गुरुरयं रात्रौ निद्रां न लभते येन केन सुप्तेऽस्मिन् भारती आगत्य सम्बोधयति किञ्च संस्कृतविदुषां गोष्ठिमायोजयितुं प्रेरयति चेति।

सप्तमसर्गः संस्कृतमूर्धन्यविदुषां सम्मेलनं वसन्ततिलकाच्छन्दसि वर्णितमस्ति। यथा–

विद्वन्मनीषिनवनेतृविराजमाना अभ्यागताः पुरजनैः सह लब्धकामाः।
गीर्वाणभाषणसमुन्नतयेऽत्र काश्यां दृश्यन्त एव सुजनाः प्रथिता नमस्याः।।२
वैदेशिकी बहुमता नवलाङ्गलभाषा नाश्रीयते सुरगिरं ह्यपहाय दिव्याम्।
दुष्टैर्जनैरिव निजां जननीं विहाय श्रीमद्वधूमुखसुखं बहुमानपूर्वम्।।३

यद्यपि अत्र महात्मगान्धि–राजेन्द्रप्रसाद–जवाहरलालनेहरूप्रभृतयो राजनेतारो विराजन्ते किञ्च रवीन्द्रनाथ–विवेकानन्द–मदनमोहनमालवीयसम्पूर्णानन्दा दिसंस्कृतविद्व द्भिस्सह तथापि बाहुल्येन संस्कृतज्ञा एव तस्मादस्य सर्गस्य नामान्वर्थसञ्ज्ञकं मन्तुं शक्यते। जानन्ति भवन्तो यदेशां जन्मकालेषु महानन्तरालोऽवलोक्यते; परन्तु विषयतात्पर्यमात्रमुपकल्यैकस्मिन् मञ्चे उपस्थापिता:। अतो नात्र सन्देहो विधातव्य:। अत्र सर्वैरेभि: संस्कृतं पठनीयमिति भाष्यतेऽस्य महत्त्वञ्च ख्यापयित्वा अभिलषन्ति संस्कृतकाव्यगोष्ठिम्।

अष्टमसर्ग: कविसमवायवर्णननाम्ना त्रिपञ्चाशतविविधच्छन्दोभिराबद्धो वर्तते।

दीप्रानना: सुकवय: श्रुतसार्वभौमा आजग्मुरत्र युववृद्धविदग्धभाषा:।
भव्याकृतिप्रथितवस्त्रसुसज्जितास्या पीयूषकाव्यरसपानपिपासुदक्षा:।।१

शृङ्गाररसादिसंवलिता: कवय: काव्यानि पठन्ति। गुरुस्तु संस्कृतविषयकं काव्यं 'विस्मृतं नाम किं हे मदीयं सखे' इति संस्कृतरक्षार्थं श्रावयति। अन्ते देशे संस्कृतं कीदषमिति ज्ञातुं प्रचारयितुं च गन्तुमनास्मीति सूचयति।

नवमसर्गो वसन्ततिलकाच्छन्दसि षडशीतिपद्यै: संस्कृतोत्थानभ्रमणवर्णनामास्ति। यथा–

रम्याकृतिर्विपुलधीर्निजशिष्यहस्ते दत्त्वास्वकीयमहितं नवसार्वभौमम्।
ऐय: स्फुरल्ललितसंस्कृतकेतुपाणिर्वाराणसीं सुरगिरा चकितां विधाय।।४

अत्र श्रीवासुदेवस्तुरगाधिरूढो मानचित्रानुसारं समग्रमपि भारतवर्षं परिभ्रमति, तत्र–तत्र च संस्कृतध्वजमुत्तोलयति। संस्कृतचक्रवर्तित्वं साधयित्वा काशीं प्रत्यावर्तत इति विमृष्टं वर्तते। ततो महिलासम्मेलनं कामयमानोऽवलोक्यते।

दशमसर्ग: पादाकुलकच्छन्दसि एकसप्ततिपद्यैर्महिलासम्मेलनाभिधानोऽस्ति।

अत्र विशेषतो महिलानां कर्तव्यदायित्वविषये परामृष्टं वर्तते। महिला एव बालानां प्रथमा पाठशाला मन्यते। यथा–

शिशुलालनपालनमिह जननी कुरुते सदा मुदितमनस्विनी।
शिक्ष्यन्ते च तया निजबाला: प्रथमा या सुमता पाठशाला।।२

अतो मया महिलासम्मेल: करेलिमो नवसंस्कृतखेल:।
व्यचारयन्ननु मनुजवदान्य: सृष्ट्यै यथा विधाता मान्य:।।३

अतो निजसन्तीस्ता: सभ्या यदि वाञ्छन्ति तदा संस्कृतं पाठयन्त्विति परामर्शो दत्तोऽस्ति। अत्रान्तरे कृषकैरभ्यर्थितस्सन् कृषकसम्मेलनं कर्तुमिच्छति।

एकादशसर्ग: कृषकसम्मेलनवर्णननामा वसन्ततिलकाच्छन्दसि विरचितो वर्तते। अत्र द्वापञ्चाशत्पद्यानि सन्ति, यत्र कृषकाणां दयनीयदशा सर्वकारोपेक्षा चेति वर्णितमस्ति। गुरुणा सर्वकारो वितर्जितो यत्कृषकेषु यदि ध्यानं नासौ ददाति तदान्दोलनं विधाय स्वाधिकारो लप्स्यत इति। यथा–

त्रीन् विप्रधेनुविदुषो ह्यभिवन्द्य सौम्यो दृष्ट्वा दशां सुखहरीं कृषकस्य सद्य:।
उद्धूतरोषहृदयो ज्वलदात्मदेह: क्रोधाग्निना बुधशिखी परितो ददाह।।१

विद्याकलाललितसंस्कृतभाषरक्ष: क्षुब्धो रुदत्कृषकपीडनपीडितस्सन्।
देशीयशासनमसौ त्वरितं ततर्ज श्रीवासुदेवबुधसिंह इवावर्गजन्।।२

भो: शासक शृणु सखे गदितं समस्तं दु:खाग्नितप्तजनमानसबोधितस्य।
यो भारतं श्रमकणै: कृषक: पिपर्ति हत्या त्वयास्य नितरां क्रियते यमेन।।

अत्रैवगुरोरवदानसमाकर्षिता विश्रुतविद्वांस: समायान्ति गुरुवासुदेवं प्रार्थयन्तेऽस्य सभाजन–सम्मानसभायोजनायेति।

द्वादशसर्गो वासुदेवसम्मानवर्णनाख्यश्शार्दूलविक्रीडितच्छन्दसि निबद्धो वर्तते। एकसप्ततिपद्यैरयं सर्गोऽस्य काव्यस्य मुख्यं विषयं समुपस्थापयति। अत्र महान्तो विपश्चितो विराजन्ते, यैरयमस्मदीयो गुरुरभिनन्द्यते वन्द्यते पूज्यते शब्दप्रसूनसन्दोहप्रचुरैरिति। सम्मानान्तरं गुरुस्स्वानुभवं हृद्भावाञ्श्च प्रकाशयति। अत्रासौ संस्कृतप्रचारणकार्यविमुख–शिष्यान् जागरयितुमुच्छलद्करुणहृदुद्गारं वमति। यमाकर्ण्य कदाचिदिमे स्वकर्मणि व्यस्तास्सन्तोऽपि देवभाषारक्षणप्रचारपूज्यकर्मणश्च्युता न स्यु:। यथा–

मच्छिष्या यदि संस्कृताय गमनं कुर्वन्ति तस्माद् ध्रुवं
तेनैतन्निजजन्मन: सुफलतां मंस्ये बुधा: शिष्यका:।
यद्येते परिवर्धने सुरगिर: स्वे जीवने निष्क्रिया
नूनं पण्डितवासुदेवमनुजो यास्याम्यहं लाघवम्।।४६

अत्रान्तरे सभायामुत्थितध्वनिना विज्ञाप्यते यद् हे गुरो त्वया न संस्कृतप्रचारकार्यार्थं

चिन्ता विधातव्या यतोहि ते शिष्या असाधरणाः , तेऽवश्यं सुरगिरः प्रचारं करिष्यन्ति। इत्युक्त्वा शिष्याणां

नामानि गुणपुरस्सरं क्रमश उच्यन्ते। यथा–

श्रीकृष्णकान्तशर्म–सुरेन्द्रमोहनत्रिपाठि–विद्यानन्दद्विवेदिद्धगुरुपुत्रः–सन्तोष–शुक्ल–शरदिन्दुत्रिपाठि–धर्मदत्तचतुर्वेदि–रामविनयसिंह–भारतीप्रकाशश्रीनिवास द्विवेदिद्धपौत्रद्वयञ्च–विवेकपाण्डेय–कामेश्वरशुक्ल–मनमोहन–वाचस्पति–जितेन्द्र पाण्डेय–रविशङ्करपाण्डेय–प्रियंवदानन्तमणि–प्रतापमिश्र–चित्रसेन–शैलेशत्रिपाठि–धर्मेन्द्रत्रिपाठि–व्रजविहारिपाण्डेय–शशिकान्तद्वय–विपुलशुक्ल–जीवनशर्म्म–रमाकान्तपटेरिया–वागीश–विमलेन्दु–पतञ्जलि–सचिनारविन्दादयश्शिष्या गृह्यन्ते। अन्येऽप्यगृहीतनामानो बहवोऽन्तेवासिन आसन्नित्येकेन पद्येनाभिसूच्यते। इदमाकर्ण्य गुरुवासुदेवः प्रफुल्लितवदनः संस्कृतरक्षणाय विदुषोऽन्तेवासिनः शिष्यान् कुटुम्बिनश्च सम्बधोयन् स्वर्लोकं दिव्येन विमानेन प्रयातीति यथा–

श्रुत्वा तद्धवननं प्रियं गुरुवरोऽयं सस्मितो लोकयन्

शिष्यान् सर्वकुटुम्बिनश्च विदुषः सम्माननीयान् जनान्।

ऊचे विह्वलमानसोऽल्पवचनं गीर्वाणभाषाप्रियः

स्वर्लोकं प्रति यामि संस्कृतबुधाः संवर्ध्यतां संस्कृतम्।।७०

एकोर्ध्वषष्टियुतविंशतिवैक्रमाब्दे

ज्येष्ठे सिते बुधदिने निजशिष्यवृन्दम्।

प्राणान् विमुच्य गतवान् स्वरसौ विनीतो

दिव्यं विमानमधिरूह्य गुरुर्मदीयः।।७१

विजितहृदय! श्रुत्वा धन्यो भवामि, गुरुभक्तिस्ते वर्धतां नितरां समुद्रवीचिरिवेति कामये। सखे! श्रूयते उपनिषदो ज्ञानदायिन्यो विलसन्ति लोके। अस्ति कश्चिदत्र लोकव्यवहारः? आं सखे! तर्हि श्रावय। शृणु सुमित्र!

भारतीया संस्कृतिर्विलक्षणा, विश्ववन्द्या, अध्यात्मविद्याविभूषिता, असंख्यमुनि जनानवरतसहस्रसंवत्सरविहितोग्रतपोबलगृहीतविस्मयावहविचारवर्णनरुचिरा,

जीवाजीवमायादिचिन्तनतत्परदार्शनिकजनचित्ताहरणक्षमासंसारदु:खानलाभि तप्तजनेभ्य: पीयूष—वचोभि: सुखदा सत्यपि लोकव्यवहारशिक्षणोद्यताद्दृश्यत मयेति। यद्यपि उपनिषत्सु यत्र तत्र लोकव्यवहारो दृश्यत एव, तथापि तैत्तिरीयोपनिषदि यादृशो लोकव्यवहारो लोकितो न तादशोऽन्यत्रेति मन्ये!

अयि! समस्तविशिष्टविद्यालंकरणालंकृतमानसा! विबुधा! ज्ञातमिदं भवद्भिरस्ति यत् तैत्तिरीयोपनित् सर्वाभ्य उपनिषद्भ्य: पार्थक्यं भजत एवेति मदीयो विमर्श:। एतत्पार्थक्यमेवास्या वैशिष्ट्यं सूचयति।

विचार्यतां यदि समस्तप्रजा अध्यात्मविद्योपासनासक्ता एव निरन्तरवैराग्यानन्दाब्धि—

निमग्नैव भवेत्तदा का दशास्य जीवलोकस्य? दृश्यन्ते औपनिदविचारा: जीवमायेश्वरसृष्टिप्रभृतिविलक्षणतत्त्वनिचयव्याख्यानाग्रहव्याकुला: , यस्मात् कारणादिमे न सर्वजनबोधगम्या मता गृहस्थधर्मपालननिरतानामिति। लोकजीवनमपि रक्षणीयम्। यदि सर्वैरपि सन्न्यास एव गृह्यतां, तदा किमस्य संसारस्येति। अनेन तु सृष्टेर्नैरन्तर्यमपि बाधितं स्यात्! अतश्चिन्तितमूर्ध्वदृष्टिसम्पन्नमुनिसहस्रेण यल्लोकव्यवारोऽपि स्थापनीय एव कश्चित्। येनाक्षुण्णतास्या: सृष्टेस्तिष्ठेदिति। इदमपि न विस्मरणीयं यद् यत्र—तत्र स्वक्षेत्रव्यस्तत्वात्समयाभावाच्च मानवो न ब्रह्मविद्याप्रवचनश्रवणमना दृश्यते हन्त! असौ च पृच्छति किमस्ति लोकज्ञानायेति। अतस्तदेव लेखनीयमिति मत्वा स्वविचारो विलिख्यते।

तैत्तिरीयोपनिषद: शीक्षावल्ल्या: प्रथमेऽनुवाके शान्तिपाठएव '' शं नो मित्र: शं वरुण:। शं नो भवत्वर्यमा। शं नो इन्द्रो बृहस्पति:। शं नो विष्णुरुरुक्रम:——१।''इति लोककल्याणकारिणी प्रार्थना समाचरिता महर्षिभिरिति विमृश्यते।

—शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा, कर्णाभ्यां भूरि विश्रुवम्, २ अर्थात् मदीयं शरीरं योग्यं स्यात्, मामकीना वाणी मधुमती भूयात्, कर्णाभ्यां भूरि शृणुयाम्।अत्र चिन्त्यतां कथं महर्षिणा चिन्तितमिदम्? लोके जीवनाय शरीरं सुन्दरं स्वस्थं निरायममत एव योग्यं भवेत्, अशेषव्यवहारमूला प्रिया वाण्येव जगति श्रुता, स्निग्धा आनन्दं प्रयच्छति, परुषा चित्तप्रतिकूलतामुपहरतीव को न जानाति। सर्वव्यवहाराभिव्यंजनसमर्था वाणी न कदापि परुषा स्यात् सदैव मधुमयीं वाचं वदेयम्, प्रोक्तमपि—

सत्यं ब्रूयात् प्रियं प्रियं ब्रूयात् न ब्रूयात् सत्यमप्रियम्।

प्रियं च नानृतं ब्रूयादेष धर्मस्सनातन:। ३

येन न कलहो जायेत। कर्णाभ्याम् अत्यधिकं श्रोतव्यं वचनं श्रवणीयम्। मान्या:! इह हि संसारे न हि कश्चिदपि कमपि सावधानतया शृणोति, जन्मजातवक्तारो बहवो न श्रोतुमभिलषन्ति हन्त! येन व्यवहारशून्यता प्रकटिता भवत्येव। यदि सर्वो जन: श्रोतव्यं वचनं सर्वं शृणुयात् तदा न कदापि वैमत्यवृक्षो वर्धिष्यते। अतो मन्तव्यं यल्लोकव्यवहारार्थं तैत्तिरीयोपनिषद: सदुपदेशवाक्यानीमानि सदोपादेयान्येव। उपनिषदियं विलक्षणा मन्त्रात्मकेन वाक्येन समुपदिशति लोकव्यवहारम्।

विलोक्यतामत्र

यशो जनेऽसानि स्वाहा। श्रेयान् वस्यसोऽसानि स्वाहा।४

अस्याशयो न बहुभिरनध्यात्मिकैरवगम्यते पुरुषैरिति मन्ये। साधारणार्थकमिदं वाक्यद्वयमसाधारणार्थत्वमुपगतम्। सामान्यतया प्रथमवाक्यस्य अर्थ:—अहं जनसमूहे यशस्वी भूयासम्। असामान्योऽर्थ:—अहमेतादृशं कृत्यं करवाणि येन मम यशो वर्धतां सर्वत्रेति। वाक्यमेतल्लोकव्यवहारतां शिक्षणमाणं यशोलब्धुमुपदिशति। न यशस्विनामयं लोक:, स जातो येन जातेन याति वंशसमुन्नातिमिति नीतिवचनश्रवणात्। ज्ञेयं जनैरवश्यमेवैतत् यत् केवलं मन्त्रजापेन किं च यज्ञे यागे वा वैदिकादिमन्त्रहोमानुष्ठानेन नैव यशो लभ्यते। यशस्तु कृत्यैरेव लभ्यत इति मन्देनापि विज्ञायत एवेति नास्ति संशय:। मन्त्रा: प्रेरका न तु दातारोऽभिलाषसहस्रस्य। अपरं वाक्यं च परिशील्यते—वसुमतोऽपि वसुमान् भूयासम्। किं कथनेन नैव भो! तदनुकूलकर्तव्यसम्पादनेनैतत् सम्भवति। अत्र कर्माकर्मपरिज्ञानमत्यन्तं समुपादेयं भवति। लोके यदि सुखपूर्वकं जीवनयापनं करणीयं चेत् धर्माधर्मग्रहणपरिहाराभिज्ञानमनिवार्यम्। अयमेव लोकव्यवहार:। एवं ब्रह्मचारिणे वेदविद्यां परिश्राव्य लोकव्यवहारोऽनुशास्यते।

अये व्यवहारशास्त्रिण:! यादृशी व्यावहारिकी शिक्षा तैत्तिरीयोपनिषपिद श्राविता सा क्वचिदपि प्राप्यते किम्? नैव। श्रूयताम्—

सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमद:।५—

ज्ञायत एवाशयो वाक्यानामेषाम्। यदिजीवने कश्चिदपि सत्यमार्गारूढो न तस्य काचिदपि हानिरिति विश्रुता वागस्ति। सम्प्रति नैतद् विलोक्यते। अत: परिस्थित्यनुकूलमेव सत्यं वक्तव्यमित्यभिप्राय:। धर्मं चरेति। उपनिषत्सु धर्मपदेन मन्ये कर्तव्यमेवाबोधितमस्ति। ईशोपनिषदपि कर्म शिक्षमाणा ब्रवीति—

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः। ६

प्रजातन्तुं मा व्यवच्छेत्सीः।

देवपितृकर्मभ्यां न प्रमदितव्यम्,

मातृदेवो भव।

पितृदेवो भव।

आचार्यदेवो भव।

अतिथिदेवो भव। ७

न विज्ञापनीयमस्ति किञ्चिदत्र यल्लोके कियती आवश्यकता वर्तते, एषां व्यवहारशिक्षाणामिति।वदन्त्सेव केचन विनष्टमतयो यदुपनिषदादिशिक्षया जन आजीवनमेकाकी जीवति। हन्त! असाधु वचनमिदमज्ञानान्तेषाम्। सुस्पष्टं तैत्तिरीयोपनिद् ब्रवीति यत् सन्तानपराम्परा रक्षणीयाः। सृष्टिचक्रसंरक्षणं करणीयम्। अस्माकं श्रद्धा देवे पितरि दृढमूला मता। अतस्तेषां कृते यानि शास्त्रोक्तकर्माणि तानि कर्तव्यान्येव न विस्मरणीयानीति।

महानुभावाः! हन्त! परिहीयन्ते वृद्धा जनन्यः स्वसन्ततिभिरिति नाविदितमिह विलोचनानामपि। यया जन्म लब्ध्वा संसारसुखमनुवन्ति जनास्तामेव कथं विमुञ्चन्ति? नायं सद्व्यवहारः। अतस्तन्नियमनाय मातृदेवो भवेति व्यवहारशिक्षा परमोपयोगिनीति प्रतिभाति। मातृवदेव पितरोऽपि हीयन्त एवेति श्रूयते। क्व गतो लोकोऽयम्? येन जनकेन स्वकीयं समग्रमपि बलं धनं वा समुत्सृज्य सन्ततयो शिक्षिताः स एव आपणे, ग्रामे, चतुष्पथे, मन्दिरे, वृद्धाश्रमे प्रतिदिनं दुःखसहस्रमनुभवन् दिनान्यतिवाहयति। धिगीदृशीं सन्ततिम्। यया जीवनदातारः, पालनकर्तारः रक्षयितारश्चभिक्षुकवृत्त्या जीवनयापनार्थं विवशीक्रियन्ते। यदि तैत्तिरीयोपनिषद इयं व्यवहारमूला शिक्षा दीयेत तदा नूनमेव लोककल्याणं भूयादित्यनुमिनोमि। एवमेव आचार्यदेवो भवेति व्यवाहारमूलकमनुशासनमपि लोककल्याणकारि प्रतीयते। सम्प्रति नाचार्या आद्रियन्ते शिष्यैरिति हन्त!। अतः क्षीयते शिक्षणम्, पलायते अनुशासनं व्यथते व समाजः। अस्ति समुपादेयतास्य व्यवहारमूलकस्यानुशासनस्येति मदाशयः। अतिथिदेवो भवेति वाक्यमपि गभीरमर्थं प्रकटयति। परिवर्तिनि संसारे क्रियाकलापानुकूलता प्रतिकूलतानुसारमेव आतिथ्यं करणीयम्, न तु सर्वथा विस्मरणीयमेव।

अग्रे सर्वप्रमुखमनुशासनमिदं मन्तव्यम्, यद्धि लोकव्यवहारं पाठयति—

यान्यनवद्यानि कर्माणि तानि सेवितव्यानि। नो इतराणि। यान्यस्माकं सुचरितानि। तानि त्वयोपास्यानि। नो इतराणि। ८

अर्थात् निन्दनीयं कर्म न करणीयम्। यानि च कर्माणि शुद्धमतिभिरस्माभिराचरितानि तान्येव त्वं कुर्या, न तद्विपरीतानि।

—यदि कर्मविचिकित्सा व वृत्तविचिकित्सा वा स्यात्। ये तत्र ब्राह्मणाः सम्मर्शिनः। युक्ता आयुक्ताः। अलूक्षा धर्मकामाः स्युः। यथा ते वर्तेरन्। तथा तत्र वर्तेथाः।।——एतदनुशासनम्।९

इदमस्ति मुनीनामृषीणां चिन्तनम्। आचार्यो ब्रूते—यदि तव जीवने कर्मसम्पादनावसरे आचारविचारे व्यवहारे वा सन्देहो भवति तदा न भेतव्यम्, ये विचारशीलाः, कर्मणि नियुक्ताः, स्वेच्छया कर्ममार्गनिरताः, सरलमतयो धर्माभिलाषिणो ब्राह्मणा यथाचरन्ति तद्वत् त्वयापि समाचरणीयम्।

अहह!! सत्यमदगस्त्वम्। उपनिषदोऽस्माकं मार्गदर्शिकाः सन्ति। पश्यामि काश्यां देशे वा संस्कृतस्य दशा एवं दिशा च न शोभने स्तः। अस्मिन् विषये भवतः किमभिमतम्। तदुच्यताम्। संस्कृतदशाविलोकनजनितसंक्षुब्धहृदयोऽहमेकदावाराणस्यामायोजयिश्यमा—णत्रिदिवसीय—संस्कृतप्रचारसम्मेलनस्य कृते विचारितं वक्तव्यं प्रस्तौमि। तदाकर्णय। मान्य सुरभारतीसमुपासकाः! प्रख्यातकीर्तयो विद्वांसः! वयमिह समर्पितजीवनसर्वस्वानां देशे विदेशे संस्कृतध्वजसंवाहकानां सार्वभौम—संस्कृत—प्रचार—संस्थानस्य संस्थापकानां सम्प्रति स्वर्गमलंकुर्वतां तत्र श्रीमतां यशस्विनां वासुदेवद्विवेदिसद्गुरुवराणामन्तेवासिनः। येषां प्रतिरोम संस्कृतं निवसति, श्वासे प्रश्वासे अमरवाणी आयाति याति, समग्रं शरीरं, संस्कृतस्य मूर्तं रूपमेवास्माकम्। अतः ये ये सुरभारतीप्रणयिनस्ते नूनमेवास्मद्—बन्धवो वर्तन्ते। तदहं सर्वप्रथमं चातुर्वेदसंस्कृतप्रचार—संस्थानस्य बन्धुवरं संचालकमहोदयं श्रीचन्द्रकान्तशुक्लं धन्यवादयामि येनायं महान् संस्कृतयज्ञोऽनुष्ठितः। ततो विचारान् विवृणोमि।

साश्चर्यं ब्रवीमि विश्वविद्वन्मण्डलीमूर्धन्या काशी नगरी संस्कृतभाषाया या केन्द्रमासीत् तस्या सुखावहा एतादृशी स्थितिर्यत्रत्या पण्डिताः केवलं शिक्षणकर्मस्वेव संलग्नाः सन्तोऽपि निरन्तरंसंस्कृतप्रचारकार्येषु व्यस्तास्सन्तीति मत्वा संस्कृतदशा प्रशंसनीया।

अये! अमृतपुत्रा! सत्यमिदं यत् संस्कृतस्य दशा दयनीया सम्प्रति दृश्यत एवेति नात्र विस्मयः। अस्य कारणानि बहूनि सन्ति,

प्रथमं यत्र विद्यालयेषु विश्वविद्यालयेषु विद्यार्थिनां संख्या भूयसी आसीत् पुरा तत्रैव अल्पीयांस एव विद्यार्थिनस्सन्ति, एष्वपि अनेके अनध्ययनशीला अध्ययनशीलानेव पीडयन्तीवेति श्रूयते। चिन्तितमस्माभिर्यत् कथं संस्कृतच्छात्राणां संख्याह्रासो जातः? नैव। क्व समयोऽस्माकं घटिकायाम्? वयन्तु पण्डिताः। नेदं कार्यमस्माकमिति।

द्वितीयं सुविदितमेव भवतां, तद् वक्तुमपि लज्जामनुभवामि। श्रूयते यत् यत्र कुत्रापि संस्कृतक्षेत्रे नियुक्तिर्भवति तत्र तत्र स्वनामधन्यैरेव निजसन्ततिः योग्यतामनपेक्ष्य धनबलप्रभावात् नियोज्यते। यद्येतत् सत्यं तदावश्यमेवपरिक्षीयते कृतभूरिपरिश्रमाणां विद्यार्थिनां विश्वासः!

तृतीयं अये विबुधाः! नेदं तथ्यमस्माभिर्विस्मरणीयं यत् प्राक्काले या शिक्षा गुरुकुलेषु प्रदीयते स्म, सा आध्यात्मिकी भवति स्मेति सर्वोऽपि जानीते जनः' या विद्या सा विमुक्तये'' विद्ययामृतमश्नुते' इति वाक्यानि नार्थप्रधानतां साधयन्ति। परन्तु साम्प्रतिकी दीयमाना शिक्षा नाध्यात्ममूला विलोक्यते। इयन्तु अर्थप्रधानैव सर्वतः। अतोऽनेनापि कारणेन सस्कृतस्य ह्रासो भवत्येव।

चतुर्थं प्राक्काले आसीत् राजतन्त्रं येन शासक एव सर्वोपरि मन्यते स्म। न तदानीं विभिन्नाभिर्भाषाभिस्सह परिचयस्सर्वेषामिति। यवनानामागमनेन आङ्ग्लानामाक्रमणेन च संस्कृतस्य एकच्छत्रत्वं दूशितम्। मन्यतां पुराकाले संस्कृतं राजकीया भाषा सम्मतासीत्। रामायणं महाभारतमस्य प्रमाणत्वं साधयतः। सम्राट् चन्द्रगुप्तस्य शासनमपि संस्कृतभाषयैव समचाल्यतेति कौटिल्यार्थशास्त्रदर्शनात्। इदमपि वक्तुं न शक्यते यदेकैव सस्कृतभाषा तदानीं विराजते स्म प्राकृतपैशाचीप्रभृतिभाषाणां नाटकादिषूपलब्धेः। परन्तु राजकीयभाषापदोपलब्धिवशादेव संस्कृतं सर्वमान्यमासीत्। सम्प्रति तु प्रजातन्त्रं व्यक्तिमात्रहस्तगतं शासनं दृश्यते। यवनाङ्गलाभ्यां दलितं चर्वितं दूयमानं संस्कृतं जीवति एतदेव वरम्। आश्चर्यम्!! स्वाधीनदेशे भारतेआङ्गलभाषा समाद्रियते न तु संस्कृतमिति। अतो ह्रासो जातस्संस्कृतस्य। न यावत् संस्कृतं राजकीयभाषापदं लप्स्यते तावदस्य सम्पूर्णो विकासो भविता।

पंचमं मन्यतां तदानीमासीत् राजतन्त्रं यत्र केवलं राजनीति—युद्धविद्यादिशिक्षा एव दीयन्ते स्म। राजभवनेषु च महाकवीनां विश्रुता गोष्ठ्योऽपि समायोज्यन्ते स्म। कवीनां

समुचितं सम्मानं राजा स्वयमेव करोति स्मेति श्रूयते। किञ्च योगविद्या, आयुर्वेदशिक्षा, पदपदार्थावबोधाय व्याकरणशिक्षा, धर्मकर्मपरिरक्षणाय मीमांसादर्शनं, सम्यक्परिक्षणाय न्यायशास्त्रम् अन्यानि च बहूनि सूपयोगीनि शास्त्राणि आङ्गलभाषाप्रभावेण दूरीभूतानि। बहुभिस्तु विभिन्नभाषासु अनुवादो विहितः। हन्त! मानवस्य घटिकायां समयो न वर्तते सपरिष्कारं परिशीलनस्य, अतोऽसौ अनुवादमेव पठित्वा स्वकार्याणि साधयितुमीहते। अस्मादपि क्षयो दृष्टः संस्कृतस्य। वदन्त्यपि जनाः यदि अनुवादमात्रेण ज्ञानं लब्धुं शक्यते तदा कथं कफछथचटवित्युच्चारणं? किमुत्तरमस्य प्रश्नस्येति चिन्तनीयमस्माभिः।

षष्ठं सरलं सस्कृतं बहुभिः विद्वद्धौरेयैः वृत्तिवार्तिकभाष्यादिपरिष्कारेणं संस्कृतस्य कल्याणं कुर्वद्भिः जटिलं कठिनं संस्कृतमिति व्यधायि। मया चिन्त्यते यत् यावान् लाभो जातोऽनया वृत्त्यादिपद्धत्या तस्मादप्यधिको ह्रासो जातस्संस्कृतस्य।अतः सस्कृतं सरलमेव रोचते, न तु जटिलमिति मदीयं चेतो ब्रवीति। सूत्राणां दर्शनेन आभाति यत् महर्षिभिः स्वल्पमुक्तं यथाअक् अच्। अकः सवर्णे दीर्घः। एतद्वरमेव। अनेन किञ्च वृत्त्या वा नूनमेव कार्यसिद्धिः। एतत्पश्चाद् यदुक्तं तत्तु पाण्डित्यप्रदर्शनम्। क्वचिन्मनोरमा, क्वचिच्च मनोरमाकुचमर्दनी। हन्त! अनेनापि संस्कृतह्रासं मन्ये। अनेनैव प्रकारेण प्रायः सर्वत्र विजृम्भितं तत्तद्विषयविषेशज्ञपण्डितानां संस्कृतं दुनोतीव। नाहमस्य भाष्यादिरचनस्य विरोधी, मम वक्तव्यस्याशयो वर्तते यदिमे ग्रन्था भवन्तु पृथक् पाठ्यक्रमात्। विदुषां विलासमनोतन्वतामिमे परन्तु कोमलमतीनां विद्यार्थिनां कालक्रमेण क्षीयमाणबुद्धीनां कृते विचारणीयम्।

सप्तमं पाठ्यक्रमनिर्धारणमपि दोषावहमेव सम्प्रति। यद्यपि विशेषज्ञैर्निर्धायते पाठ्यक्रमस्तथापि न युगानुकूलता दृष्टिपथमारोहति। लघुकक्षासु यदि भवभूतेर्नाटकांशो दीयते तेन किम्? अन्यच्च कादम्बरी–दशकुमारचरितोत्तररामचरितादिकाव्यग्रन्थांशा न सम्प्रति शोभन्ते। सर्वत्र क्षीयते संस्कृतं यतेतस्य कारणं पाठ्यक्रमोऽपि दोषमावहति।

विचार्यतां को लाभः? एषां पाठनेनेति पृच्छन्ति विज्ञाः। किं वक्तव्यं निगदन्तु विचार्य।

आधुनिको विद्यार्थी सर्वमपि पाठ्यक्रमं युक्त्या साधनोति। हन्त! नायं सपरिष्कारं परिशीलयति। अतः क्षीयते संस्कृतम्। मन्ये यावत् समयानुकूलं संस्कृतं न भविश्यति तावदस्य दशा दयनीयैव स्थास्यति। नायं युगो विनोदस्य धनार्जनस्येति वर्तते। अतः काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्। इति यद् वचनं तत्तु पृथग्गतम्। इदानीं तु–

बुभुक्षितैर्व्याकरणं न भुज्यते
पिपासितैः काव्यरसो न पीयते।
न च्छन्दसा केनचिदुद्धृतं कुलं
हिरण्यमेवार्जय निष्फला गुणाः।।

स्वयमेव संस्कृतज्ञो भाषते अर्थकरी विद्याभीष्यते। अस्यां परिस्थितौ यदि संस्कृतं नार्थं साधयति तर्हि संस्कृताद्विरतिस्ततोऽस्य ह्रासः। पाठ्यक्रमेषु कृषि–चिकित्सा–सैन्य–वाणिज्य–सौन्दर्य–वास्तुशिल्पादिविद्यानां शिक्षणं संस्कृतमाध्यमेनापि सम्पाद्यताम्, अनेन संस्कृतस्य दशा दर्शनीया भविता न शोचनीयेति। मान्याः! सस्कृतस्य विषया आङ्गलभाषाद्यनुवादपुरस्सरं यदि पाठयितुं शक्यन्ते तदा कथं न वैज्ञानिकाविष्कृतविषया अपि संस्कृतानुवादपुरस्सरं पाठ्यन्ते? आश्चर्यम् अस्माभिस्संस्कृतज्ञैरपि अनुवादोऽन्विष्यते। अनेन दशा शोचनीयाद्य संस्कृतस्येति। न श्रमं कर्तुं कष्चिदभिलषति। गृहे सन्ति पुस्तकानि तथापि दूरभाषेण फेसबुकेन व्हाट्एपेन परिपृच्छति विष्टरगतः संस्कृतज्ञ इति ज्ञात्वा विस्मयो जायते।

अष्टमं पत्रिका या अपि प्रकाश्यमानाः सम्प्रति देशे ताः न संस्कृतज्ञा हृदयेन पठन्ति, न वा तत्र किञ्चिल्लेखितुकामा अपि बहवो दृश्यन्ते प्रख्याताः प्रतिष्ठितपदमलं कुर्वाणाः देहल्यां संस्कृतपत्रिकाः प्रकाश्यन्ते बहव्यस्तत्रत्येनैकेन सम्पादकेनाहं ज्ञातो यत् सस्कृतज्ञा एव हिन्द्यां स्वविचारान् प्रेषयन्ति असौ च द्रव्यादिकं दत्वा अनुवादं कारयित्वा पत्रं प्रकाशयति। चिन्तनीयमस्माभिर्दोषः क्वास्ति। द्वित्रा पंचषा वा संस्कृतज्ञा सोत्साहं लिखन्त्यपि तदपि माननीयैर्न परिषील्यते। अतो ह्रासस्संस्कृतस्य। अन्यत्र तु बहुभिः आईएसएनसंख्यां सम्प्राप्य महद्धनमादाय नगण्या अपि लेखा प्रकाश्यन्ते गण्या नैव धनं विनेति पश्यामः। इदमपि संस्कृतह्रासकारणम्। क्वचित्तु धनमपि गृहीत्वा न प्रकाश्यते इति ज्ञात्वा खिन्नोऽस्मि। प्रकाश्यन्तां पत्रिकाः परन्तु उदीयमानलेखककवीनां पृथक् कापि सरणिर्भवेत्, तत्र संशोधकाः परिशीलयतारो परामर्शकाष्च विराजन्ताम्। तेन संस्कृतदशा दर्शनीया नान्यथा दयनीयैव मन्तव्या।

नवमं कारणं संस्कृतह्रासस्य यदि किमपि मन्यते तदस्ति पुरस्कारादि वितरणमस्मिन् क्षेत्रे। बहुभिश्श्रूयते विलोक्यते पुरस्करणीयो न पुरस्कृतः, कश्चिदन्य एव तदर्हः। कथं? अयमस्ति दोषः। अनेन मानेप्सवः कुप्यन्ति, समारब्धमपि श्लाघनीयं कार्यमुत्सृजन्यत्येवेति। अतो न यावत् सुयोग्यानां यथोचितं सम्मानो विधास्यते तावत् संस्कृतस्य दशा दर्शनीया भविता।

दशमं कारणस्ति प्रान्तवादरूपात्मकं यथा दक्षिणप्रदेशीयोऽयम्, उत्तरभारतीयोऽयम्, अत्रापि स्वस्वक्षेत्रेष्वपि वैभिन्यं विचारेषु तस्माद् ह्रासो दृश्यते। अन्यप्रदेशीयं स्वभिन्नप्रदेशस्थं विद्वांसं नाभिनन्दतीवेति श्रुतम्। वसुधैव कुटुम्बकं मुखेनोच्चारयन्तोऽपि वयं संस्कृतज्ञाः ईर्ष्यामः, असूयामः,।

पण्डितं पण्डितं दृष्ट्वा श्वानवत् घुर्घुरायते।

अस्मादपि कारणात् संस्कृतस्य दशानुदिनं दयनीया। यावदयं कुत्सितो भावो दूरीभवत्येव न तावत् संस्कृतं विकासमेष्यति किम्? अन्यच्च विचारणीयविषयेषु मौनितापि विदुषां संस्कृतह्रासकारणमस्ति। संस्कृतविदुषामैक्यं दृश्यत एव न यतः क्षीयते संस्कृतम्। दृष्टं विगतवर्षे जर्मनसंस्कृतविवादे न कश्चिदपि महामहोपाध्यायो महामहिमसम्मानितो वा विद्वान् स्वतर्कपूर्वकं सस्कृतपक्षपुष्टास्थायदिति। आसन् बहवो यैः संस्कृतपक्षे स्वभावः प्रकटितः। परन्तु महोच्चपदस्था नाभाषन्त हन्त! अनेके संस्कृतवृत्त्युपजीविभिरपि संस्कृतस्य विपक्षे मूक्तकण्ठेन संस्कृतस्य निरादरः कृतः। नवनिर्वाचितस्य भाजपासर्वकादलीयसर्वकास्य अनेके मन्त्रिणस्संस्कृतभाषायां शपथग्रहणं कृतवन्तः। अत्रापि बहूनां संस्कृतेतरभाषाभाषिणां किञ्च तथाकथितसंस्कृतज्ञानामपि हृदयानि सूचीविद्धानि जातानि।

अस्तु तिष्ठतु इहैव संस्कृतदशावर्णनम्, सम्प्रत्यहं संस्कृतदिशा केति विषये किञ्चिद् लेखितुकामोऽस्मि। अगणितकंटकबाधानिबद्धं संस्कृतं तथैव प्रवहति यथा भागीरथी। मान्याः! वर्तमानसमयः सोशलमिडियाया दृश्यते। फेसबुक–व्हाट्सएप–गूगलादिमाध्येन संस्कृतधारा निरन्तरं सम्पूर्णेऽपि विश्वे वायुमार्गेण भ्रमति। संस्कृतस्य विचारकाणां कवीनां गीतकाराणां लेखकानां समर्थकानां प्रचारकानां चानेके समूहाः कार्यरतास्सन्ति। अन्तर्जालपत्रिकाः यथा संस्कृतसर्जना, प्राचीप्रज्ञा अन्याश्च नितरां संस्कृतं सेवमाना विलोक्यन्ते। फेसबुके असंख्याः समूहाः संस्कृतप्रचारे संलग्ना अहोरात्रं संस्कृतं वर्द्धयन्ति। क्वचित् संस्कृतवाक्याभ्यासं कश्चिद् विद्वान् कारयति, कश्चित्तु काव्यप्रशिक्षणं सम्पादयति, क्वचिद् भागवतश्लोकाः श्राव्यन्ते, कविच्च विविधाः स्तुतयो मनों विमोहयन्ति। वन्दे वाणीविनायकौ, संस्कृतकुटुम्बकम्, संस्कृतसर्जना, व्हाट्सएपस्य समूहास्तु सुतरां प्रशंसनीयाः, यत्र संस्कृतप्रचारः क्रियमाणो वर्तते। फेसबुकस्य विशालः समूहः संस्कृतपद्यरचनाख्योनवनवकवीनां काव्यानि प्रस्तौति। अह।सर्वत्र आनन्दमनुभवामि। अतो वक्तुं शक्यते यत् संस्कृतस्य दिशामनोरमा। भविकालश्चास्य सुखावहः।

सखे श्रुत्वा दशां दूयते मन्मनः। अस्तु किं संस्कृते पत्रकारिताविषये किमप्युक्तमस्ति न वेति। यदि वर्तते तत्कथय। सर्वमस्ति संस्कृते महोदधिकल्पे सखे। सावहितचित्त शृणु—संस्कृते पत्रकारितेतिहासम्—

अखिलमनोरमविषयवल्लरीविभूषितस्य संस्कृतसाहित्यस्य विशालोदराकाशे सर्वमपि तत्त्वजातमुपलभ्यत इवेति निश्प्रचं वक्तुं शक्यते। अद्यतनसमालोच्यमानसंस्कृतसाहित्ये पत्रकारितेतिहास—विषये स्वविचारान् वक्तुमहमभ्युत्सहे।

मान्याः! सर्वप्राणिषु शेमुषीसम्पन्नो मानवोऽतिशेते सिंहकरिप्रभृतिबलवज्जीवानिति को न जानाति? स्वबुद्धिवैभवेन देवानपि जयत्यसौ। सृष्टे रचनानन्तरं विचारशीलमनुष्यैः स्वविचारप्रकटनाय कश्चन मार्गः समाश्रित आसीत्। पूर्वं चित्रलिप्या विचारविनिमयो भवति स्मेति ऐतिह्यग्रन्थेषु पठ्यते, परन्त्वेतत्कियत्सत्यमिति वक्तुं न समर्थावयम्। अस्तु शनैश्शनैः वर्णान्वेषणमभूत्, तत्सहयोगेन परस्परभावाभिव्यक्तये पत्रपत्रिकादिमाध्यम आविर्भूत इति सम्भाव्यते।

मान्याः! विपुलं संस्कृतसाहित्यम् एतत् प्रमाणयति यद् वैदिककालादेव पत्रकारिता प्रचलितास्ति। वेदे लभ्यमानाः संवादा यथा यमयमीसरमापणिप्रभृतयः तदानीन्तनपत्रिकारूपमेव सूचयन्ति। उपनिषत्स्वपि दृश्यमानाः संवादाः चर्चा वा तात्विकी महत्त्वपूर्णाः सन्ति, यत्र तत्रा मौखिकी पत्रकारिता लभ्यत एव। यथा सम्प्रति साक्षात्कारः कस्यापि भवति पत्रिकायां तदवदुपनिषस्वपि वैदिकमहर्षीणामुपलभ्यते साक्षात्कारः। तत्त्वमसि, अहं ब्रह्मास्मि, विज्ञानमेवेदं सर्वं, सत्यं वद, धर्मं चर, आचार्यदेवो भव, मातृदेवो भव, पितृदेवो भव इति वाक्यानि प्रबलसंचारकाणि यानि अद्यापि तद्वदेव विलसन्ति। अस्मन्मते तु सर्वमिदं वैदिकं पत्र—पत्रिकादिकमेवास्ति। नचिकेतोयमसंवादोऽपि कठोपनिषदः पत्रिकात्वं साध्यति।

विज्ञाः! पुराणेषु एको महान् पत्रकारो दृश्यते, यः सन्देशान् वृत्तानि वा सर्वत्र प्रचारयति प्रसारयति स्मेति। विख्यातनामासौ नारदर्षिः न केन स्मर्यते? अयमेव प्रथमः पत्रकारो वैदिकः पौराणिक इत्यत्र न संशीत्यवसरप्रसरः। सर्वत्र नारदस्याप्रतिहतगतेर्गमनानगमनमपि पत्रकारसंवाददातृत्वमस्य प्रमाणयति। अनुमीयते यत् पत्रिकादिकार्यकुशला नारदाभिधा मन्यन्ते स्म, एकस्यैव नारदस्य सर्वत्राबाधात्या समुपस्थितिर्नैव भवितुमर्हतीति मत्वैतद् विचार्यते। यथा पुराणकर्ता महर्षिर्व्यासो नैकव्यक्तिविशेषः, अपितु पदविशेषो मन्यते बहुभिरिति।

विश्रुतकोविदाः! पुनरहं समुद्घोषयामि यत् पत्रिकाया इतिहासः प्राचीनो वर्तते, परस्परविचारादानप्रदानाय मानवैः मौखिकसन्देशाः प्रेष्यन्ते स्म। तदनु भूर्जपत्रादिषु लिखितसन्देशाः कालान्तरे प्रेषिताः। दूताः एव सन्देशवाहका अभूवन्। अवलोक्यतां रुक्मिणीसन्देशो भागवतमहापुराणे भगवते श्रीकृष्णाय प्रदत्ताः, यथा–

यस्याङ्घ्रिपङ्कजरजःस्नपनं महान्तो

वाञ्छन्त्युमापतिरिवात्मतमोऽपहत्यै।

यर्ह्यम्बुजाक्ष न लभेय भवत्प्रसादं

जह्यामसून् व्रतकषाञ्छतजन्मनि स्यात्॥

एवं सप्त श्लोकाः विप्रेण श्रीकृष्णाय श्राविता आसन्।

इत्येते गुह्यसन्देशा यदुदेव मयाहृताः।

विमृश्य कर्तुं यच्चात्रा क्रियतां तदनन्तरम्॥

स्वमेव भगवानपि पाण्डवानामादाय सन्देशानागत दुर्योधनं प्रति। यमधिकृत्य महाकविना भासेन दूतवाक्यम् इति नाटकं व्यरचि। महाकविकालिदासस्य गीतिकाव्यं मेघदूतं पत्रिकाया एव नवीनं रूपमस्ति।अयमेव सन्देशप्रकारो मानवविकासगत्या सह पत्रिकारूपमलभत।

अयि विद्वांसः! महर्षिवाल्मीकिप्रणीतग्रन्थे यदा विभीषणो रावणतिरस्कृतो राम शरणमागतः, तदनन्तरमेव लङ्केशेन दूता प्रेषिताः, तौ रावणसैन्यं विलोकमानौ धृतौ वानरैर्बहु ताडितौ, श्रीरामेण मोचितौ लंकामुपगतौ रामसन्देशानादाय। किन्तु महाकविना तुलसीदासेन अयमेव प्रसङ्गः विशिष्टरीत्या अवर्ण्यत, अत्र तुलसीदासो वर्णयति यत् रामानुजेन लक्ष्मणेन रावणाय लिखितं पत्रं समर्पयामास। इदमेव पत्रं पत्रिकेति तत्रैव प्रोक्तम्। यथा–

रावण कर दीजहु यह पांती,

लछिमन बचन बाचु कुलघाती। सुन्दरकाण्डे। अग्रे–

सुनि खल बचन दूत रिसि बाढ़ी।

समय बिचारि पत्रिका काढ़ी॥

रामानुज दींहि यह पांती, नाथ बचाइ जुड़ाहु छाती॥

रामायण एव हनुमान् अङ्गुदसन्देशवाहकौ दूतौ इवा दृश्येते। अत्रैव शुकादिगुप्तचरा अपि पत्रकारावद् व्यवहरन्तश्चेतोहन्तीवास्माकम्। साहित्यग्रन्थान् पश्यन्तु तत्र स्वयंवरकाले विभिन्नदेशीया राजानो राजकुमारा वीरा येन सन्देशमाध्यमेन समुपस्थिता भवन्ति स्म, स माध्यमः तदानीन्तनो दूरसञ्चार एवास्ति। लिखितसन्देशान् दूताः सन्देशवाहका एव नयन्ति स्मेत्थमपि श्रूयत एव। अतः संस्कृते पत्रकारिताया इतिहासः अतीव प्राचीनो मन्यते। योगिनस्तु सर्वोपकरणाभूषणभूषिताः पत्रकारा आसन् ये क्षणमेव त्रिकालवृत्तानि साक्षात् कुर्वन्ति स्म। पुत्रकामनया यदा दिलीपो वशिष्ठमुनिमुपयातः सादरं पृच्छति तदा स्वल्पकालिकेन माध्यानेन दृष्टमुक्तं महर्षिणा। तदिदं रघुवंशे महाकविवचनमेव प्रमाणयति—

इति विज्ञापितो राजाध्यानस्तिमितलोचनः।
क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः।
सोऽपश्यत्प्रणिधानेन सन्ततेः स्तम्भकारणम्।
भावितात्मा भुवो भर्तुरथैनं प्रत्यबोध्यत्।।

पश्यन्तु महर्षिव्यासमनीषासमुद्भूतं महाभारतम्। आश्चर्यम्! महद् आश्चर्यम्!! समग्रमपि महाभारतीयं वृत्तान्तं महान् पत्रकारः साक्षात् पश्यन् श्रावयति धृतराष्ट्रम्। नोपकरणमिष्यते स्म प्राचीनसंस्कृतयुगे। आदिकविर्वाल्मीकिकस्तु दिव्यचक्षुषा पूर्वमेव रामकथामरचयदित्यपि वृत्तान्तं रुचिकरमाभाति। यथा आधुनिकाः पत्रकारा निर्वाचनादिपरिणामं यदा यदा शतप्रतिशतं सत्यमेव निगदन्ति।

माननीया विचक्षणाः! सर्वमपि स्तोत्रसाहित्यं कथासाहित्यं पत्र—पत्रक—पत्रिकाभिधनं मन्तव्यम्। स्वयं महाकविस्तुलसीदासो लिखति विनयपत्रिकाम्। एतदनन्तरम् यत्र यत्र पत्रिकाप्रकाशनमारब्धं जनैरिति अनुमीयते। किञ्च आधुनिककाले सर्वप्रथमं या पत्रिरका संस्कृतस्य प्रकाशिता सा विद्यानगरीकाशीतः १८६६ इस्वीयवर्षे काशीविद्यासुधनिधि इति नाम्नी आसीत्। वर्तमानसमये देशे १२३ संस्कृतपत्रिकाः प्रकाश्यन्ते दैनिक—साप्ताहिक—पाक्षिक—मासिक—त्रैमासिक—षाण्मासिक—वार्षिकप्रभृतयः। ईयुगे अनेकाः पत्रिकाः प्रकाश्यमाना उपलभ्यन्ते, याभिः संस्कृतमनुदिनं वर्धमानमस्ति। संस्कृतलोकस्ताः पाठं पाठं प्रसन्तामनुभवन् वर्तते।भारतीयानि संस्कृतसंस्थानान्यपि प्रयतमानानि दृष्टिपथमायान्ति पत्रपत्रिकादिविकासायेति श्रूयते। अधुना विश्वविद्यालयेषु पत्रकारितापाठ्यक्रमः सञ्चाल्यमानो दृश्यते, सर्वत्र पत्रकारिताविषये सङ्गोष्ठ्यः प्रर्वतमाना संस्कृतसाहित्यस्य व्यापकत्वं साधयन्तीति।

सखे जानामि ते शेमुषीम्। सर्वदानुकूलं भाषते भवान्। जितमित्र! वार्ताप्रसङ्गे मयानुभव एष कृतो यद् भवान् सांख्यदर्शनप्रेमी वर्तते। बहु श्रावयता त्वया सांख्यतत्त्वानि श्रावितानि।

मित्र! समायातो सायंकालो वदतस्तव शृण्वतो मम च। तदपि न कापि व्यग्रता, भगवतो गृहे समस्यातिपात: कुत:। तदिह पश्य पूर्णिमारजनीहागमिष्यति चिरमेव। अतो नाहं गन्तुं कामये। किमप्यपरं श्रावय। श्रूयते बालानां कृते संस्कृते किमपि लिखितमस्ति न वेति संस्कृते? अस्ति मित्र! बहु वर्तते। शृणु संस्कृते बालसाहित्यम्—

संस्कृतवाङ्मयं सर्वातिशायि विश्वस्मिन्निति को न जानीते? अस्मिन् सर्वमपि सन्निहितं तत्त्वजातमित्यपि सर्वैरपि स्वीकृतमेवास्ति। अत्रत्यं विपुलं साहित्यं बालानामेवास्ति। सर्वप्रथमं विचार्यतां को बाल:? सामान्यतया षोडशवर्षदेशीय एव बाल उच्यते। बालानां साहित्यं, बालेभ्य: साहित्यम्। इत्युभयमपि बालसाहित्यपदेन मन्तुं शक्यते।बालायुष्यनिर्धारणायायेदं पद्यमुचितं मन्यताम्—

लालयेत् पञ्चवर्षाणि दशवर्षाणि ताडयेत्।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत्।।
माता शत्रु: पिता वैरी येन बालो न पाठित:।
न शोभते सभामध्ये हंसमध्ये वको यथा।।

अत: वक्तुं शक्यते यद् अवयस्को बाल:। एतादृशो बाल एव कथं ज्ञानविज्ञानसम्पन्नो भूयादिति कामनया विद्वद्भिरनेकानि साहित्यशास्त्राणि विरचितानि सन्तीति विलोक्यत एवेति नात्र संशय:। पञ्चतन्त्रं बालानामेव शिक्षणार्थं राजनीतिकुशलाचार्यैर्विरचितमस्तीति कस्य दृष्टेरविषय:। अत्र विविधाभि: मनोरञ्जन। कथाभि: महती राजनीतिविद्या प्रदत्ता वर्तन्त इति स्वीक्रियत एव। अद्यापि इमा एव कथा: संसारस्य अगणितभाषासु गृहीता: ज्ञानराशिं वितरन्त्य: संस्कृतबालसाहित्यस्य महत्त्वं ख्यापयन्त्यो विलसन्तीति भवद्भि: कैर्न ज्ञायते।ग्रामेषु नगरेषु च पितामहीमातामहीमुखात् श्रूयमाणा: श्रुता वा कथा: संस्कृतबालसाहित्यस्यैव सम्पदस्ति। अवलोक्यतामस्य पञ्चतन्त्रस्य मङ्गलाचरणम्—

मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्राकर्तृभ्य:।।

सकलार्थसारं जगति समालोक्य विष्णुशर्मेदम्।

तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्राम्।।

विज्ञायत एव दाक्षिणात्ये जनपदे महिलारोप्ये नगरे अमरशक्तिर्नाम राजासीत्, यस्य त्रयः पुत्रः परमदुर्मेधस आसन्, बहुशक्तिरुग्रशक्तिरनन्तशक्तिरिति।

मान्याः सुरभारतीसमर्चनतत्पराः! एवमेव हितोपदेशः बालानामेव उपकाराय विरचितो मनोमोहयतीव बालानाम्।

बालसाहित्यमेव विलोक्यतां–

नत्वा सरस्वतीं देवीं शुद्धां गुण्यां करोम्यहम्।

पाणिनीयप्रवेशाय लघुसिद्धान्तकौमुदीम्।।

इयं कौमुद्यपि बालसाहित्यमेवास्ति। पाणिनीयप्रवेशो बालेभ्य एवास्ति।

अत्रापि

ननादढक्कां नव पञ्चवारमित्यपि क्रीडावत् भगवतश्शङ्करस्य सूत्राणाम् आविर्भावः बालानामेव मन्तव्यः। ग्रामेष्वपि ढक्कावादनश्रवणकाकुला बालाः निर्गता गेहात् कस्मिंश्चिच् चतुष्पथे मायेन्द्रजालिकस्य विस्मयानि कृत्यानि विलोकन्त एवेति।

मान्यवराः सुमतयः!

एतत् प्रतीयते यत् बालानां हितायैव समग्रमपि साहित्यं रचितमस्ति। श्रूयताम्

बालोऽपि यो न्यायनये प्रवेशमल्पेन वाञ्छत्यलसः श्रुतेन।

सङ्क्षिप्तयुक्त्यन्विततर्कभाषा प्रकाश्यते तस्य कृते मयैषः।।

अतस्तर्कभाषापि बालसाहित्यभूतमेवास्ति। नात्र संशयो विस्मयो वा करणीयः कैश्चिदपि।

एवमेव अर्थसङ्ग्रहोऽपि बालसाहित्यमेव कथन्नस्ति–

वासुदेवं रमाकान्तं नत्वा लौगाक्षिभास्करः।

कुरुते जैमिनिनये प्रवेशायार्थसङ्ग्रहः।।

श्रीजैमिनिनये ग्रन्थः प्रवेशाय निरूपितः।

विदुषा तत्र बालानां कौमुदीयं वितन्यते।।

मित्राणि! सहर्षमिदं स्वीक्रियतां यन्महर्षिवाल्मीकिप्रणीतं रामायणमपि बालसाहित्यमेवास्ति। कथमितिजिज्ञासायां वच्मि—सावहिताः शृण्वन्तु भवन्तः।

प्राप्तराज्यस्यरामस्य वाल्मीकिर्भगवानृषिः।
चकार चरितं कृत्स्नं विचित्रापदमर्थवत्।।
चतुर्विंशत्सहस्राणि श्लोकानामुक्तवानृषिः।
तथा सर्गशतान् पञ्च षट्काण्डानि तथोत्तरम्।।
कृत्वा तु तन्महाप्राज्ञः सभविष्यं सहोत्तरम्।
चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः।।
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ।
भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ।।
स तु मैधविनौ दृष्ट्वा वेदेषु परिनिष्ठितौ।
वेदोपबृंहणार्थाय तावग्राहयत प्रभुः।।
रूपलक्षणसम्पन्नौमधुरस्वरभाषिणौ।
बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथापरौ।।

एवं रामायणकथां कण्ठीकृत्य कुशलवाभ्याम् आगतेभ्यो मुनिभ्यः श्रावितम्।

ऋषीणां च द्विजातीनां साधूनां च समागमे।
यथोपदेशं तत्त्वज्ञौ जगतुः सुसमाहितौ।।

उपनिषत्स्वपि बालसाहित्यमेव सम्प्राप्यत एव। कठोपनिषदि नचिकेतस उपाख्यानं बालसाहित्यस्य समुचितमुदाहरणमस्ति। यत्र एकः कुमारः पीतोदका, जग्धतृणा दुग्धदोहा निरिन्द्रिया गा दक्षिणासु दीयमानासु विलोक्य स्वपितरं विमृश्य तेनाज्ञप्तस्सन् यमलोकं जगाम। किञ्चात्मज्ञानमवाप्तवान्।

ततश्च जगति कीर्तितः। अनेनैवप्रकारेण ध्रुवस्यापि कथा बालानां कृते परमोपकारिणी वर्तते।

प्राचीनकाले एवंविधमासीत् बालसाहित्यम्। तदानीन्तनबालानां बुद्धिरपि विशिष्टा भवति स्म। समग्रमपि वातावरणं संस्कृतमयमासीत्। कादम्बर्यां महाकविबाणभट्टविरचितेन पद्येन दर्शनीयं रूपं प्रचीनमिति—कुबेरस्य वेदाध्ययनकौशलमत्र दर्शनीयमस्ति।

जगुर्गृहे यस्य समस्तवाङ्मयैः
ससारिकैः पञ्जरवर्तिभिः शुकैः।

निगृह्यमाणा वटवः पदे पदे

यजूंषि सामानि च यस्य चक्रिरे।।

पाश्चात्यसंस्कृतिप्रभाविते आधुनिकयुगे तु देववाणी पृथक् भवति बालानां मुखात्। इदमालोक्य बहुभिः सुरभारतीसेवकैः नवीनाानि साहित्यानि रचितानि सरलानि तानि बालोपयागीनि सन्त्येव वक्तुं शक्यते। यथा अस्माकं गुरुभिः स्वनामधन्यैः वासुदेवद्विवेदिमहोदयैः बालानां संस्कृतपरिज्ञाय वृद्धयै महान् यत्नः कृतः, बहूनि पुस्तकानि प्रणीतानि, यथा बालगीतावली, बालकथामालाः। सम्प्रत्यपि बहुभिः बालसाहित्यं रच्यमानं दृश्यते। अस्माकं गुरुवराणां बालगीतानि अतीव मनोहराणि—

मम बालपाठशाला बहु शोभते विशाला

शिशवः पठन्ति यत्र पलकेषु वर्णमालाः।।

किञ्च

निपतति जम्बूः टप् टप्

बालः खादति गप् गप्।

मयारविन्देनापि गुरुमार्गानुगामिना बालगीतं रच्यते।

यथा—

वर्षागानम्।

नृत्यति तप्तं दग्धं चित्तं

याति स्वेदो दूरं शीघ्रं

वने मयूरो गायति गीतम्।।

मेघो वर्षति सलिलं शीतं

घर्मो दृश्यत एव न दुष्टः

जीवो येन तपतीव कृष्टः।

मन्ये विहसति सर्वो वृक्षः

मण्डूकः सम्पल्वते शिष्टः।।

बालो मित्रैस्साकं नृत्यन्

गायन् मार्गे धवति मुह्यन्।

शुभति ग्रामे तोयप्लावः

भ्रामं भ्रामं स्वच्छीकुर्वन्।।३

अन्धकारसाम्राज्यं वृद्धं
दिवसे दीपवितानं क्रुद्धं।
पश्यन्नन्दति गहनं नद्धं
लभते सौख्यं प्राणी शुद्धम्।।४
तोयबिन्दुराशीन् तर्जन्या
ब्रूते पश्य पश्य स हसित्वा।
क्रोडे पौत्रं बालं कृत्वा
पितामहो दर्शयते हृष्ट्वा। ५
नीत्वा साकं विहसन् पुत्रा
स्कन्धे कृत्वा लसन् खनित्रं।
क्षेत्रं गच्छति कृषको मित्रं
वृष्टी राज्ञी तनुते चित्रम्।।६
बालः कश्चित्कर्गदनावं
वृष्टिजले चालयति सरावम्।
हे हे तालिमसौ कुर्वाणः
प्राप्नोत्येव कवे निर्वाणम्।।७
तिरङ्गध्वजगानम्।
तिरङ्गाध्वजो यस्य हस्ते स पूज्यो
जनो भारतीयः प्रवीरः सहर्षम्।
तिरङ्गध्वजो यस्य हस्ते न दृष्टः
स हेयः स हेयः स हेयः सगर्वम्।।१

तिरङ्गाविहीनः करः शक्तिहीनः
तिरङ्गायितं मानसं सौख्यलीनम्।
तिरङ्गान्वितं मे वचो हे सखायः
तिरङ्गाकुलः प्राणवायुर्मदीयः।।२

तिरङ्गां स्वहस्ते वहन्तः सुभाषः
स बोसः स लालः स बालः स पालः।

सखा बिस्मिलः सैष आजादवीरः
स्वदेशस्य मुक्त्यै बलिं स्वं प्रचक्रुः।।३

तिरङ्गा मनो मे तिरङ्गा शरीरं
तिरङ्गैव देवः तिरङ्गाद्य सर्वम्।
तिरङ्गाध्वजं स्वं करे सन्दधनाः
वयस्या वयं देशरक्षां प्रकुर्याम।।४

वयं जातिधर्मप्रवर्णादिभेदं
विहायैकमत्येन हे भारतीयाः।
तिरङ्गाप्रिया मातृभूमिं नमन्तः
स्वशत्रुं बलिष्ठाः सदा घातयेम। ५

तिरङ्गा गृहे नः तिरङ्गा वनेषु
तिरङ्गा गिरौ खे तिरङ्गा नदीषु।
तिरङ्गा समस्तासु दिक्षु प्रहृष्टा
लसेन्मातृभूमेः सुपुत्रा वदेम। ६

सखे! मनोहरगानश्रवणसुखमनुभवन् पुनः पुनः संस्कृतगीतानि श्रोतुमभिलाषामि, भवता यदि लिखितं गीतं तदा शीघ्रं श्राव्यताम्। उत्कण्ठा वर्धते। अये सुरभारतीरसज्ञ! लिखितानि कानिचिद् गीतानि श्रूयन्ताम्। प्रथमं कीदृशं श्रोतुं कामयते सखा? मित्र! बालसाहित्यसन्दर्भे त्वया तिरंगागानं श्रावितम्, येन देशप्रेम रक्ते प्रवहति वेगेन। अतः राष्ट्भक्तिपूर्णं गानमेव पूर्वं श्रावय। सत्यं देशभक्तिं विना मानवो भवत्येव पशुतुल्यः। शृणु सखे!

श्रूयतां बन्धवःसादरं सोदराः
भारतं प्रेक्षते नः प्रवीरान् नराः।

एष पाकःखलःकूर्दतेऽनारतं
सीम्नि देशस्य विस्फोटनं कारयन्

हा शयाना निशीथे प्रिया: सैनिका:
तेन नीचेन वीरा हता: पापिना।।१ ।।

श्रूयतां बन्धव:सादरं सोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।

यस्स्वयं भिक्षुको याचतेऽर्हनिशं
कंसहस्तो धनं हन्त देशान्तरम्।
पंगुरेषोऽधुना प्रोन्नतं भारतं
वीक्ष्य शोकाकुलो दूयतेऽनारतम्।।२।।

श्रूयतां बन्धव:सादरं सोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।

नास्ति पेयं जलं नैव सैन्यं दृढं
ज्ञानविज्ञानदृष्टि: कलाकौशलम्।
यत्र चातंकवृक्षो महान् वर्धते
सैष पाको विमूढो मुधा स्पर्धते।।३।।

श्रूयतां बन्धव:सादरं सोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।
येनकश्मीरभूमि: श्मशानीकृता
सर्वदातंकपुत्रा: शतं प्रेषिता:
स्वर्गतुल्या धरा दूषिता शोणितै:
तस्य किन्नो शिरश्छेदनं दृश्यते?।।४।।
श्रूयतां बन्धव:सादरंसोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।

किं शृगालो मृगाधीशदेहे व्रणं
स्वैर्नखैर्भो: करोतीति संश्रूयते?
हुंकृतिं शक्तिहीनो निशम्याकुलो
हन्त नायाति युद्धे बिले लीयते।।५।।

श्रूयतां बन्धव:सादरं सोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।

धन्यवादो जनैर्भारतीयैर्हृदा
हे नरेन्द्राद्य मोदिन् सहर्ष मुदा।
गृह्यतां दीयमानो रुषा नाश्यतां
पाकदेशो मदीयं मनो भाषते।।६।।
श्रूयतां बन्धव:सादरं सोदरा:
भारतं प्रेक्षते न: प्रवीरान् नरा:।

वन्दे मातरम्। वन्दे भारतम्। तव गीतमिदं श्रुत्वा मदीयप्रमत्ततापसरतीव शनैश्शनै:। समीहे सीम्नि सैनिकैस्सह मिलित्वा शत्रुदन्तान् खण्डयितुम्। निर्बल: एवं कुरुते पाको भारतेन सह। ध्न्यवादार्हो मोदिमहोदय:।

सुमित्र! देशे सम्प्रति दृश्यमाना कन्याभ्रूणहत्या पीकाकरी, त्वया किमपि रचितं विषयमिमधिकृत्य? आं सखे रचितमस्ति, तच्छृणु—

२ न मारय पितर्मा त्वदीया सुताहम्
अवध्यां दयालो शुभां मातृकुक्षौ
अदेहामजां मां सुतां पुत्रभिक्षो
इमां पिण्डरूपामजातां प्रपश्यन्।
न मारय पितर्मा त्वदीया सुताहम्। १
अहो मत्पितर्दृश्यसे लोकभीतो
यत: कोमलाङ्गीं निहन्तुं प्रवृत्त:।
त्यजैतत् कुकृत्यं जघन्यं विनिन्द्यं
न मारय पितर्मा त्वदीया सुताहम्। २

क्व याचे धनानि पटं भूषणानि।
क्व भाषे वचांसीह विपरीतकानि।
अये वज्रहृत्वं भवेः वीतचिन्तः
न मारय पितर्मा त्वदीया सुताहम्। ३

कराले कलौ सन्ति दैत्या असंख्या।
भ्रमन्तो यतः कन्यकास्ते सुरक्ष्याः।
बिभेषीव हा हन्त दष्ट्वा पितस्त्वं
न मारय पितर्मा त्वदीया सुताहम्। ४
चलापाङ्गनेत्रा निरीहानवद्या
मृगी सिंहदेषागतेवाद्य हृद्या
यदा दानवैर्भक्ष्यते हन्त नित्यं
न मारय पितर्मा त्वदीया सुताहम्। ५

खलं यौतुकं वर्धते नो विशालम्
धनं सम्पदो लोकमानं कुचालम्

यतो हन्यते पुत्रिकारत्नमेवम्
न मारय पितर्मा त्वदीया सुताहम्। ६

अहह!!! निर्गच्छन्ति अश्रूणि सूचयन्ति वेदनां तव सखे! दुष्कृतिनो न विरमन्ति पापादपि।

रम्या वन्द्यास्माकं संस्कृतिर्न जाने क्व दूरीभवति। सुहृत्! संस्कृतिमुद्दिश्य मदीयां कवितामिमामाकर्णय।

३ क्व संस्कृतिः पलायतेऽधुना ?
अये कोविदा
यशस्विनो मनस्विनः
क्व संस्कृतिः
पलायतेऽधुना ?

नो' ऋचां ध्वनिर्गृणाति
नो कवे रसः पुनाति
भारते विदेश—
भारती महीयते
क्व संस्कृतिः
पलायतेऽधुना ?
आदिसत्कविप्रणीत—
रामचन्द्रचारुगीत—
मेति नो रसातलं
वदन्तु निर्भयं
क्व संस्कृतिः
पलायतेऽधुना ?
भारतं मुनिर्लुनाति
साधुतां जनो जहाति
कृष्णगीतिका क्व, याति
भुक्तिमुक्तिदा
क्व संस्कृतिः
पलायतेऽधुना ?
वित्तभूमिगेहलोभि—
मानवैरहो वचोभिः
युध्यते सहोदरैः
कृपाणपाणिभिः
क्व संस्कृतिः
पलायतेऽधुना ?
पुत्रकामिभिर्गृहेषु
पुत्रिकाहतिर्दिनेषु
कन्यकाह्वतिर्दिवा—
निषं न श्रूयते

क्व संस्कृतिः
पलायतेऽधुना ?

साधु लिखितं मित्र! स्वार्थपरायणा न पश्यन्ति किमपि सखे! हृद्गतं किमपि पृच्छामि। कि।जीवने त्वया प्रेम कृतम्? किंलब्धम्। यदि गीतिमाश्रित्य वक्तुं शक्नोषि चेद्वरम्।

मैवं पृच्छ्यताम्। कथं हृदये शूलं करोषि? यदि कौतुकं ते तदाकर्ण्यताम्।

४ अयि मानिनि कामिनि किं हृदयात्
उपयासि शुभांगि कृशांगि शुभे।

कुसुमानि मृदूनि शतानि न किं
चिकुरेषु कृतानि मया हसता।
विहृतं जलवीचिषु सौख्यभरं
स्मर विस्मरसीह कथं कुपिते।।१ अयि मानिनि।

तव नूपुररावहृतो नितरा–
मचलं चपले बहुवीथिशु किम्।
हरमन्दिरद्वारमुपागमनं
न निशम्य मया चलितं त्वरितम्।।२ अयि मानिनि।

न ममांकगता कमनीयकचा
रमणीयमुखा शयिता शिथिला।
मम पाणितलं स्वकरे दधती
प्रणयादवदः स्मर रम्यवचः।।३ अयि मानिनि।

रसरासमागने श्रुतयोः
पिककूजननर्तनहारिरवः।
मधुपः कमले कमलं विपिने
विपिने विजहासि कथं रमणे।।४ अयि मानिनि।

अपथं तमिमं स्मर भामिनि भो
रतितापविधायिनि हृन्निहिते।
अरविन्दमहो ललितं सुहृदं
त्यजसीह कथं मधुमासि नतम्।।५अयि मानिनि।

अहो! सरसो भवान् जयति। भवत्येव जीवने घटना सर्वेषामीदृशी। अस्तु अन्तरयामि विषयमधुना। मित्र! विचित्रा सृष्टिः। न समता लोके, किमपि श्रावय सृष्टिमवलब्य। आं सखे! मदीयमपि चेतो दुनोति दर्शं दर्शमिदम्। शृणु तावत्

५ भगवन् तव सृष्टिरियं विशमा
हृदयं मम दाहयते त्वधुना।।

धनिनां सदनेषु न दुःखलवो–
ऽधनिनां च गृहेषु न सौख्यरवः।
पटभूषणभोज्यं वनं सदनं
पटभूषणभोजनषून्यगृहम्।।१ भगवन्

वहतीव पयोऽब्धिरहो सदने
न हि बिन्दुरहो पयसोऽस्य गृहे।
शिशुरस्य सुखं लभते निखिलं
न सुखं शिशुरस्य कथं लभते।।२ भगवन्

स्वपितीह मुदा सदने स धनी
बहुशीतभरे समयेऽपि विधे।
स्वपितीव कदा धनहीनजनः
यदि शीतलता भ्रमतीव गृहे। ३ भगवन्

घनमुक्तजलं सदने न गतं
घनमुक्तजलं सदनान्नो गतम्।
अयि निर्दय ईश कथं पिहितं
जगतो रचनासमये नयनम्।।४ भगवन्

सुखसाधनभोगविलासमयं
समयं न्वतिवाहयतीव धनी।
अधनोऽसुखभोगविदग्धजनः
अतिवाहयतीव निजं न वयः।।५ भगवन्

मृतके सुखभाजि जने विपुलं
विकिरन्ति धनं स्वजनाः न कथम्।
पटहीनतनुर्धनशून्यजनः
धनलिप्सुरसौ यतते न कथम्।।६ भगवन्

सम्यक् चित्रीकृतं वयस्येन। जितं हृदयं भवता। मित्र! रसराजवसन्तमाश्रित्य गानमेकं श्रावय। शृणु सखे!

वसन्तगानम्।।६
सखे वसन्तदर्शनं समीहसेऽधुना प्रियं।
समेहि मित्र विष्टरात् प्रसन्नमानस ध्रुवम्।।

लतावितानमोहकं जनौघदुःखशोशकं
प्रमत्तकोकिलास्वरं स्वपुष्परागनिर्झरं।
रसालपुष्पशोभितं सहस्रषट्पदाकुलं
शुकादिपक्षिकूजितं लसत्सुमादिसंकुल।।१ सखे वसन्तदर्शनं
प्रसन्नकुंजरंजनं समस्तमानवांजनं
अनंगचापनन्दनं विदग्धकोपभंजनं।
रतिंवराविभावकं पतिंवराप्रभावकं
श्रुतिंवराकुचालकं मतिंवरासुचालक।।२ सखे वसन्तदर्शनं

वहत्परागचक्रवातबालवृन्दमोहितं
भ्रमद्विलासिनीकटाक्षमूर्च्छनाप्रताडितं।
कचादिबन्धमोचनं किशोरचित्तशोषणं
विदेशवासिरागिणां कलत्रमानवर्धनं।।३ सखे वसन्तदर्शनं

तपस्विरागवर्धनं मनस्विमानखण्डनं
मुनेः कमण्डलूजलाभिषिक्तदेहिनर्तनं।
निकामकामसम्प्रदानलब्धलोकभावनं
विरागिमानसे नितान्तदिव्यरागकारणम्।।४ सखे वसन्तदर्शनं

अबीरचन्दनादिचूर्णमानिनीप्रसादनं
अनेकवर्णतोयपूर्णचारुयन्त्रचालनं।
सुहृत्प्रियारविन्दभृंगहारिगीतगायनं
मनोऽनुकूलवायुवेगरम्यसर्वहायनं।।५ सखे वसन्तदर्शनं

रमणीयमिदं मित्र! साधु गानम्। अन्यदपि स्वेच्छया किमपि श्रावय, तव मुखादागतं सर्वमपि चेतो हरत्येव। यद्येवं तर्हि कस्याश्चिन् नवोढाया दशां शृणु सखे!

नवोढा
मामेवं प्रविहाय कांचिदपरां द्रष्टुं गतः प्राक्तनीं
याता रात्रिरये नदन्ति विहगाः सूर्योदयो जायते।
इत्थं हा रमणीह शून्यहृदया दत्वा कपोले करं
निन्दन्त्येव न भाग्यमद्य सुमुखी शेते नवोढा नवा।।१

कर्णौ स्फालयतीव कुक्कुटरवः सम्बोधयन्मां कथं
श्वश्रूर्भाषत एव गेहचटका सुप्ता प्रभाते वधूः।
हं दत्ते चपला स्वभावपरुषा गालिंननान्दाद्वयीं
नायातः क्व गतः पतिर्मम गृहात् कुर्यामहं किं प्रभो।।२

हं हो किं श्वसुरो ब्रवीति मधुरं श्वश्रूं ततो वारयन्
संकेतेन मनोहरं मृदु वचः पीयूषतुल्यं हसन्।
भार्ये विस्मृतमद्य संस्मर निजं कृत्यं कृतं यद्गृहे
मध्याह्ने जननीस्वरेण पिहितं द्वारं त्वयोद्घाटितम्।? ३

हा हा हन्त कुमार एष सुभगो मद्देवरः कोमलः
सर्वान् सारयतीव कार्यवचनान्मां वीक्षितुं व्याकुलः।
वायोर्वेगबलेन सम्प्रति पते मुक्तं कपाटद्वयं
किं ब्रूयामवबोधयेति भगवन् सत्यं मृषा वंचनम्।।४

दूरात्पश्यति मत्पतौ नयनोरश्रुस्रवो निर्गतो
ज्ञाता हन्त कथावली स्वयमहो सर्वैरपि सत्वरम्।
मा मा ज्ञापय यद्वचः पतिमुखान्मौनं मयाकर्णितं
सस्नेहं सखि सुस्मितं विहसितं सन्दर्शितं कृत्रिमम्।।५

अये सखे! सत्यमाह कश्चित् यत्र न यात्ति रविस्तत्र प्रयाति कविः। भवानेव पतिदेवरो वेति सत्यमुच्यताम्। मनोविनोद एष मधुरस्तव मित्र।

जयतु भवान्। मित्र! ते हृदि पुनरपि कयाचिद् दत्तः प्रेमाघातो दृश्यते, निस्संकोचं श्रावय। मैवं सखे! मैव।किन्तु रचनां शृणु।

अये प्रेयसि!
निर्गता त्वं कथं दूरं
प्रार्थितापि पुनः पुनः।
मामुपेक्ष्य प्रियं मित्रं
बाले कुटिलकुन्तले।।

त्वत्केशार्थं सुमं नेतुं
सुन्दरि गतवानहम्।
श्रूयतां चंचलापांगि
मां विहाय गता कथम्।।

त्वल्लाक्षारसमानेतुं
गतवन्तं मा मनोहरे।
अपहाय गता सद्यो–
ऽपरुषं परुषे कथम्।।

प्रयातं कोमलांगि नो
आनेतुं मौक्तिकस्रजम्।
अनवद्यं विहायैवं
क्व गता मृदुभाषिणि।।
मत्कृते यत्कृतं बाले
न कार्यं केनचित्सह।
वामान्यथा भवेच्छब्द–
स्सार्थकोऽन्वर्थसंज्ञकः।।

सत्यमेतत्। मयापि बहुधानुभूतम्। अस्तु धन्या त्वदीया लेखनी या रम्यं लिखत्यनवरतम्।मित्र! या लेखनी तव रुचिरं रचयति तामभिलक्ष्य रचितं किमपि? आं सखे! रचिता गीतिकैका श्रूयताम्।

यच्चिन्तयाम्यभिनवं हृदि भावमद्य
शीघ्रं निरूप्य रुचिरं तनुते प्रसादम्।
पाणौ च तिष्ठति न याति कदापि दूरं
नव्या मदीयगृहिणीव सुलेखनीयम्।।

स्पष्टा कदापि सुपदं मृदु दर्शनीयं
कम्रा निरूपयति सा वशगा कृशाङ्गी।
मग्नं करस्य सहयोगमवाप्य स्वल्पं
मां चुम्बतीह गृहिणीव सुलेखनीयम्।।

चित्तं विमोहयति मौनमहो दधाना
लब्ध्वा कराङ्गुलिमियं रमते चिराय।
सौभाग्यदा प्रियतमेव मनोऽनुकूला
जीव्यान्मदीयगृहिणीव सुलेखनीयम्।।
मद् दूरमेत्य सहसा ह्यवगुण्ठनं सा
कृत्वान्यसुन्दरजनं न विलोकयन्ती।
सुप्ता कराङ्गुलिभिरेव तु चुम्ब्यमाना
श्लिष्टा मदीयगृहिणीव सुलेखनीयम्।।

सम्प्राप्य हे सुकवय: मनसा शपामि
प्राणप्रियामहमिमां हितकारिणीं स्वाम्।
नो त्यक्ष्यते मृदुलपाणितले लसन्ती
आजीवनं सुगृहिणीव सुलेखनीयम्।।

अहो रमणीया संस्कृतभाषा, त्वदीयगानं श्रावं श्रावं मयापि गातुकामेन गीयते, श्रूयतां सखे!

शुभसंस्कृतमेतदहो रुचिरम्
विदुषां हरतीव मनस्सुचिरम्।
पठतां लिखतां बहु चिन्तयतां
सुहृदां भवतां किल तोषकरम्।।

श्रुतिसौख्यमिदं प्रचुरं ददते
हृदयं सततं मधुरं हरते
यदि तप्तजनो मनसा शृणुते
स्वत एव सुखानि शतं लभते। शुभसंस्कृतमेतदहो

मधुमाससमं सुखदं रमणं
ललितं पिककूजनसंचयनम्।
प्रवहद्रससागरमज्जनकं
रमणीनवनूपुरसुक्वणनम्।। शुभसंस्कृतमेतदहो

निगदन्ति जना बहव: कठिनं
अयि संस्कृतमेतदहो जटिलम्।
मधुरान्मधुरं सरलात्सरलं
प्रपिबन्तु मनोहरमाम्रफलम्।। शुभसंस्कृतमेतदहो

अधुनैकनिवेदनमेव बुधैः
क्रियते हृदयेन मुहू रसिकैः।
श्रुतसंस्कृतसेवनकर्मपराः
रचयन्तु समाजमिमं नवलम्।। शुभसंस्कृतमेतदहो

वसुधैवकुटुम्बकमेव सदा
जनयत् सुखयत् हृदये हृदये
रमतां भुवि संस्कृतमेतदहो
विबुधैस्सुजनैर्नितरां महितम्।। शुभसंस्कृतमेतदहो

सुहृत्! भवतस्सुरभारतीरसिकस्य गानं श्रावं श्रावं मुदितोऽस्मि। उत्तिष्ठ संस्कृतभाषाविकासाय आत्मनः तुष्टयै च चलावः। मित्र! किमिदं श्रूयते? कथं बहवः प्रसन्नाः अन्ये खिन्ना इव लक्ष्यन्ते? सखे! श्रोतव्यं शृणु, देशस्य प्रधानमन्त्रिणा कृष्णधनसंचयानां हृदये शूलं निवेशितमस्ति। अनेन कुशलप्रशासकेन मुद्रापरिवर्तनं कृतमस्ति, अतो निर्धनाः प्रसीदन्ति धनिनोऽवसीदन्ति। श्राव्यतां मित्र कापि रचना मुद्रापरिवर्तनमुद्दिश्य। हन्त! मुखरा मदीया लेखनी भार्यैव सर्वमपि भाषते, श्रूयताम्।

अये रोदनं किं करोषीव बन्धो
निशम्याद्य मुद्रास्थितिं वित्तसिन्धो।
श्रमेणार्जितं वा दरिद्राद्धृतं वा
प्रयच्छ स्वकोषेऽथवा निर्धनेभ्यः।। प्रसीदापहायाद्य कृष्णं धनं स्वम्।

निपीड्याधनान् दुःखितान् प्राप्तमेतत्
सखे योजितं यत्समग्रं निगूढं
न भुक्तं न दत्तं गृहे रक्षितं तत्
क्षिपन्मुञ्चसीहाश्रुबिन्दून् मुधा त्वम्।। प्रसीदापहायाद्य कृष्णं धनं स्वम्।

प्रपीतं स्वदेशस्य रक्तं पिपासो
बुभुक्षाकुलैर्मांसमत्तं जिघत्सो।

अये स्थूलवित्तान्ध कूपे पिपत्सो
कथं लक्ष्यसे भो विपन्नो मुमूर्षो।।३ प्रसीदापहायाद्य कृष्णं धनं स्वम्।

न जानासि साधुनं सन्न्यासिनं वा
मुनिं त्यागिनं वा प्रभुं शास्त्रवाक्यम्।
अये मा गृध: वैभवं कस्य बुद्धं
श्रुतं मूढ नो संस्कृते यद् यदुक्तम्।। प्रसीदापहायाद्य कृष्णं धनं स्वम्।

सामयिकी रचना तव प्रशस्यते। देशविकासार्थमिदमावश्यमासीत्। एवंविधा नायका एव देशसंचालका भवन्त्विति मदीयोऽभिलाषः। अस्तु त्यज संस्कृतेतरं सर्वम्। प्रणम भगवन्तं विश्वनाथम्। गङ्गा मातृका प्रतीक्षते त्वाम्। आं सत्यं वचनं सख्युः। चलावः। हर हर महादेव।

येषां वचांसि हितवन्ति मतानि सर्वाण्यद्यापि कल्मषभरे कुकलौ कथंचित्।
ते सज्जनाः सहृदया मम वन्दनीयाः मान्याः सदा भुवि सखे विबुधोपकल्पाः।।१।।

दृष्ट्वा कवेः कृतिमसौ किल शल्भते यो वन्द्यो जनोऽद्य कविभिर्नवदेवतात्मा।
मान्यस्तु नो शललशल्यमिवानुभूय कोणे स्थितो निजगृहस्य विनिन्दतीव।।२।।

भेत्तव्यमेव न हि काव्यरसानभिज्ञैःशब्दार्थबोधनरतैरिह काव्यबन्धे।
रम्याङ्गनामुखपटं करपल्लवाभ्यां शीघ्रं वयस्य! न शनैरपसारणीयम्।।३।।

सर्वांश्च पूर्वजवरानभिवन्द्य सद्यः शाण्डिल्यगोत्रप्रथितांश्च विशिष्टकीर्तीन्।
श्रीचन्द्रदीपमहितस्य पितामहस्य श्रद्धेयपादयुगलं हृदि भावयामि।।४।।

यः संस्कृतस्य बहुशःस्मरति प्रपद्यं रामायणस्य रुचिरं बहु भारतस्य।
विप्रस्य सालिकतिवारिवरस्य तस्य पुत्रोऽरविन्द इति काव्यमिदं लिखामि।।५।।

मया याच्यते देवताभ्योऽर्चनीया स्वदुर्गावती मातृकान्वर्थसंज्ञा।
मिलेज्जन्मदात्री पुनर्मामकीना जगज्जीवने नैव तां विस्मरेयम्।।६।।

यया लब्धजन्मा शिशुर्वर्धमानः पयःपायितःक्रोडदेशे निधाय।
रुदद्वाष्पवर्षैरहं शीतभीतःप्रतप्तोऽभवं तां कथं विस्मरेयम्?।।७।।
ययालोरिकागायनैर्निद्रितोऽहं करेण सिरःपादसंवाहितस्सन्।
क्षणं मद्धवनेर्वत्सला या न्यगादीदहं नातिदूरे सकाशं तवास्मि।।।८।।
पत्नी न सा कथमियं निजसार्द्धगन्तुः पत्युः प्रशंसति कृतिं हृदयेन वाचा।
दिव्येशहस्तरचिताभिनवाभिरम्या नूनं समर्थनमहो कुरुते सुनीता।।९।।

यः काव्यलेखनरते मयि दत्तचित्ते क्रीडामना निजकरे नवकन्दुकं स्वम्।
नीत्वा प्रभातसमये कुपितः कुमार आगच्छ भोश्चल पितः विभवो ब्रवीति।।१०।।

पश्यात्र हे प्रियपितः अहमागतोऽस्मि किं केवलं लिखसि मां न सुतं प्रपश्यन्।
इत्थं वदन् मयि रुषा स्वकरेण सद्यो दूरीकरोति मम लेखनीमेष बालः।।११।।

यो लोभितोऽपि बहुशो न हि मां जहाति नेतुं सदैव परिचुम्बति मत्कपोलम्।
धृत्वा पटं निजकरेण मुदा च कर्षन् नीत्वैव खेलति चिरं स मयेह सार्द्धम्।।१२।।

इति शुभम्!!

'हा हन्त'नामा उपन्यासोऽयं महामनस्विनां पण्डितमदनमोहनमालवीयानां यशोगानं कुर्वतः काशीहिन्दूविश्वविद्यालयस्थमन्दिरपरिसरादुद्भवति। यत्र कश्चित्प्रमत्तो जनो विषीदन् आसीनो दृश्यते। तदाचरणादिदर्शनसञ्जातविस्मयेनैकेन केनचिदसौ येन केन प्रकारेण तद्दशाकथाजिज्ञासमानेन मैत्रीभावनया पृष्टः, द्वयोर्वार्त्तारम्भः, तेन पञ्चवारं निश्श्वस्य यदुक्तं तदेवास्मिन्नुपन्यस्तमिह भवतां पुरतः हा हन्त! उपन्याससनाम्ना समुपस्थापितः। अत्र ग्रामवर्णनम्, नगरवर्णनम्, तीर्थवर्णनम्, समस्यावर्णनम्, विविधशास्त्रीयविषयवर्णनमिति पञ्चनिश्श्वासा विलसन्ति।




सत्यम् पब्लिशिंग हाऊस

एन-3/25, मोहन गार्डन, नई दिल्ली-110059
दूरभाष : +91-9968277749, +91-9899665801
ई-मेल : satyampub_2006@yahoo.com

ISBN 978-93-85981-56-2



'हा हन्त'नामा उपन्यासोऽयं महामनस्विनां पण्डितमदनमोहनमालवीयानां यशोगानं कुर्वतः काशीहिन्दूविश्वविद्यालयस्थमन्दिरपरिसरादुद्भवति। यत्र कश्चित्प्रमत्तो जनो विषीदन् आसीनो दृश्यते। तदाचरणादिदर्शनसञ्जातविस्मयेनैकेन केनचिदसौ येन केन प्रकारेण तद्दशाकथाजिज्ञासमानेन मैत्रीभावनया पृष्टः, द्वयोर्वार्त्तारम्भः, तेन पञ्चवारं निश्श्वस्य यदुक्तं तदेवास्मिन्नुपन्यस्तमिह भवतां पुरतः हा हन्त! उपन्यासनाम्ना समुपस्थापितः। अत्र ग्रामवर्णनम्, नगरवर्णनम्, तीर्थवर्णनम्, समस्यावर्णनम्, विविधशास्त्रीयविषयवर्णनमिति पञ्चनिश्श्वासा विलसन्ति।




सत्यम् पब्लिशिंग हाऊस

एन-3/25, मोहन गार्डन, नई दिल्ली-110059
दूरभाष : +91-9968277749, +91-9899665801
ई-मेल : satyampub_2006@yahoo.com

ISBN 978-93-85981-56-2

